पित्तकफावृतानां प्राणादीनामर्धार्धश्लोकेन लिङ्गान्याह—प्राण इत्यादि । गात्रहर्षो रोमाञ्चः । दण्डको दण्डवत् स्तम्भः । परस्परं च प्राणादीनामावरणानि विंशतिर्भवन्ति । यदुक्तं चरके,—"मारुतानां हि पञ्चानामन्योन्यावरणं शृणु" ( च. चि. स्था. अ. २८ )—इत्यादि । एषां च लक्षणं चरक एव द्रष्टव्यम् । विदेहे चैक एव वायुः स्थानकर्मभेदात् पञ्चेत्याहुः, संसर्गिद्रव्यत्वेनैकाश्रये जलवत्पृथगवस्थानानुपपत्तेः । ईशानोऽप्याह,—यथैको देवदत्तः स्थानभेदात् गृहस्थो वानप्रस्थः कर्मभेदात् कुम्भकारो मालाकार इत्युच्यते, तथा वायुरपीति ॥ २२–२६ ॥

*यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः ।
तदाऽऽक्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चरः ॥ २७ ॥
मुहुर्मुहुश्चाक्षेपणादाक्षेपक इति स्मृतः ।

आक्षेपकस्य सामान्यलक्षणमाह—यदा त्वित्यादि । सर्वा इति ऊर्ध्वाधस्तिर्यग्गाः । आक्षिपति देहं हस्त्यारूढपुरुषस्येव गात्रं चालयति । मुहुश्चर इति हेतुगर्भविशेषणम् । 'बहिश्चर' इति पाठान्तरे कोष्ठाद्बहिः शाखागतश्चरन्नाक्षेपकं करोतीत्यर्थः । चन्द्रिकाकारस्त्वेतन्नानुमन्यते, स्थानगाम्भीर्यादाक्षेपकस्य तदारम्भकवायोर्बहिश्चरत्वायुक्तत्वात् ॥ २७ ॥—

† क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्ध्वं प्रपद्यते ॥ २८ ॥
पीडयन् हृदयं गत्वा शिरः शङ्खौ च पीडयन् ।
धनुर्वन्नमयेद्गात्राण्याक्षिपेन्मोहयेत्तदा ॥ २९ ॥
स कृच्छ्रादुच्छ्वसेच्चापि स्तब्धाक्षोऽथ निमीलकः ।
कपोत इव कूजेच्च निःसंज्ञः सोऽपतन्त्रकः ॥ ३० ॥
दृष्टिं संस्तभ्य संज्ञां च हत्वा कण्ठेन कूजति ।
हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः ॥ ३१ ॥
वायुना दारुणं प्राहुरेके तदपतानकम् ।

वायोरावरणं विदुः ॥ प्राणादयस्तथाऽन्योन्यमावृण्वन्ति यथाक्रमम् । सर्वेऽपि विंशतिविधं विद्यादावरणं च तद् ॥ निःश्वासोच्छ्वाससंरोधः प्रतिश्यायः शिरोग्रहः । हृद्रोगो मुखशोषश्च प्राणेनोदान आवृते ॥ उदानेनावृते प्राणे वर्णौजोबलसंक्षयः । दिशाऽनया च विभजेत्सर्वमावरणं भिषक्"—इति ( आ० द० ) ॥ २२–२६ ॥

* 'मुहुर्मुहुर्देहमाक्षिपति हस्त्यारूढस्येव गात्रं चालयति । मुहुश्चर इति हेतुगर्भविशेषणं; वारंवारं संचरणशीलः, आक्षेपणात् चालनात्' ( आ० द० ) ॥ २७ ॥—

† 'स्थानात् पक्वाशयात् । ऊर्ध्वं शिरसि उद्दिश्य । पीडयन् रुजन् । हृदयं ततः शिरः शङ्खौ च पीडयेत् । आक्षिपेच्चालयेत् । मोहयेदिन्द्रियाणि । कष्टेनोच्छ्वासं मुञ्चति । निमीलको निमीलिताक्षः स्तब्धाक्षो वा भवतीत्यर्थः । कपोत इव कूजेत्, निःसंज्ञः संज्ञारहितः, सोऽपतन्त्रकः, दृष्टिं रूपग्रहणयोग्यां, संस्तभ्याच्छाद्य, संज्ञां ज्ञानविषयिणीं बुद्धिं, विनाश्य । वायुना मुक्ते हृदि सुखं लभते । वृते मूर्च्छते । तमेवापतन्त्रमेके त्वपतानकमाहुः । तन्त्रान्तरेऽपतन्त्रकलक्षणं पठितम् । तद्यथा—"क्रुद्धः स्वैः कोपनैर्वायुरपानो नाभिसंश्रयः । संदूष्य हृदयस्थं च मनो व्याकुलयेत्ततः ॥ पीडयन् हृदयं प्राप्य शिरः शङ्खौ च पीडयेत् ।

अस्यैवावस्थाविशेषावपतन्त्रकापतानकावाह—क्रुद्ध इत्यारभ्य एके तदपतानकमित्यन्येन । स्वैः कोपनैरित्यनेन रूक्षादिकुपितः स्वतन्त्रो नत्वावरणकुपित इतीशानः । निमीलिताक्षः स्तब्धाक्षो वा भवतीत्यर्थः । आक्षेपकश्चतुर्विधो भवति, दण्डापतानकोऽभ्यन्तरायामो बहिरायामोऽभिघातजश्चेति । दृढबलेन यद्यप्याक्षेपकात् पूर्वमन्तरायामबहिरायामौ पठितौ, तथाऽप्याक्षेपकविशेषावेतौ मन्तव्यौ, सुश्रुतदर्शनात् ॥२८–३१॥—

*कफान्वितो भृशं वायुस्तास्वेव यदि तिष्ठति ॥ ३२ ॥
दण्डवत्स्तम्भयेद्देहं स तु दण्डापतानकः ।

एतं लक्षणमाह—कफान्वित इत्यादि । भृशं कफान्वित इत्यनेन पित्तमपि न वार्यत इत्याहुः । चरके त्वस्यासाध्यत्वं केवलवातजत्वेन द्रष्टव्यम् । यदाह,—"पाणिपादशिरःपृष्ठश्रोणीः स्तभ्नाति मारुतः । दण्डवत् स्तब्धगात्रस्य दण्डकः सोऽनुपक्रमः" (च. चि. स्था. अ. २८)–इति । तास्विति सर्वधमनीषु ॥ ३२ ॥—

†धनुस्तुल्यं नमेद्यस्तु स धनुःस्तम्भसंज्ञकः ॥ ३३ ॥

अन्तरायामबहिरायामयोः साधारणं रूपमाह—धनुस्तुल्यमित्यादि ॥ ३३ ॥

‡अङ्गुलीगुल्फजठरहृद्वक्षोगलसंश्रितः ।
स्नायुप्रतानमनिलो यदाऽऽक्षिपति वेगवान् ॥ ३४ ॥
विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन् ।
अभ्यन्तरं धनुरिव यदा नमति मानवम् ॥ ३५ ॥
तदाऽस्याभ्यन्तरायामं कुरुते मारुतो बली ।
बाह्यस्नायुप्रतानस्थो बाह्यायामं करोति च ॥ ३६ ॥
तमसाध्यं बुधाः प्राहुर्वक्षःकट्यूरुभञ्जनम् ।

विशेषलक्षणमाह—अङ्गुलीत्यादि । वक्षो बाहुद्वयान्तरम् । हृदयं तदभ्यन्तरं व्यङ्गुलम् । स्नायुप्रतानं लतावदनेकप्ररोहं स्नायुजालं; स्नायुरित्युपलक्षणं, तेन सिराकण्डरयोरपि ग्रहणम् । यदुक्तं तन्त्रान्तरे,—"महाहेतुर्यदा वायुः सिराः सस्नायुकण्डराः ।

---

आक्षिप्य चाखिलं देहं मोहयेच्च पुनः पुनः ॥ स कृच्छ्रादुच्छ्वसेच्चापि स्वेदशैत्ययुतो बहिः । स निद्रां लभते नीरं प्राप्य चाशु प्रबुध्यते ॥ ग्रसते कम्पते भूयो निःसंज्ञः सोऽपतन्त्रकः । प्रलापो वमकदुता भ्रमो मूर्च्छाऽरुचिस्तृषा ॥ तस्मिन्पित्तान्विते स्वेदः पीताभः शीतकामिता । शिरोङ्गगौरवं ग्लानिः शीतद्विट् मन्दवेदनः । कफान्विते च सदनं शैत्यं च हृदयग्रहः ॥ वातोल्बणेऽङ्गस्फुरणं शिरोमन्याकटिव्यथा । धैर्यादिविप्लवो दैन्यं विषयेष्वनवस्थितिः" (आ० द० ) ॥ २८–३१ ॥

* 'तास्विति सर्वधमनीषु' (आ० द० ) ॥ ३२ ॥—

† 'स्तम्भः सामान्यः धनुःस्तम्भोऽस्यैव भेदः । धनुस्तुल्यमिति धनुस्तुल्यं क्रोडेन नम्रस्तिष्ठति, दण्डापतानकस्तु शुष्ककाष्ठदण्डवत्' (आ० द० ) ॥ ३३ ॥

‡ 'बली वायुः कुपितो गुल्फौ चरणघुटिके, अन्तःस्नायुप्रतानं धनुरिव नामयेत् । हनुः कण्ठकपोलसन्धिः । बहिरायामलक्षणमाह—बाह्येत्यादि । पूर्ववद्बाह्यस्नायुप्रतानं धनुर्वदानमेत् । बाह्यायामं पृष्ठे नतं वक्षःकट्यूरुभञ्जत्वात् । तमसाध्यमाहुः' (आ० द० ) ॥३४–३६॥—

मन्यापृष्ठाश्रिता बाह्याः संशोष्यायामयेद्बहिः"—इत्यादि । अभ्यन्तरायामं क्रोडे नतं, बाह्यायामं पृष्ठे नतम् । अन्तरायामबहिरायामाभ्यां तन्त्रान्तरोक्तकुब्जस्यावरोधः । यदुक्तं,—"हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक् । क्रुद्धो वायुर्यदा कुर्यात्तदा तं कुब्जमादिशेत्"—इति ॥ ३४-३६ ॥—

*कफपित्तान्वितो वायुर्वायुरेव च केवलः ॥ ३७ ॥
कुर्यादाक्षेपकं त्वन्यं चतुर्थमभिघातजम् ।

उक्तानामाक्षेपकप्रकाराणां कफपित्तानुबन्धमाह—कफपित्तान्वित इत्यादि । एतच्च दण्डापतानकलक्षणमेव जेज्जटेन व्याख्यातम् । पित्तकफानुबन्धश्चात्र शैत्यशोषगुरुत्वानीत्यादिनोक्तलक्षण एव बोध्यः । चतुर्थमभिघातजमिति दण्डापतानकादित्रितयापेक्षया चतुर्थत्वं, अभिघातजं दण्डाद्यभिघातकुपितवातजं, अस्य च लक्षणं-"यदा तु धमनीः सर्वाः" इत्यादिनोक्तसामान्यलक्षणं द्रष्टव्यम् ॥ ३७ ॥—

†गर्भपातनिमित्तश्च शोणितातिस्रवाच्च यः ॥ ३८ ॥
अभिघातनिमित्तश्च न सिध्यत्यपतानकः ।

असाध्यत्वमाह—गर्भपातेत्यादि । गदाधरस्त्वाह—कफपित्तान्वित इत्यादिना निमित्तभेदेनाक्षेपकश्चतुर्धेति, तद्यथा—एकः कफान्वितेन वातेन, द्वितीयः पित्तान्वितेन, तृतीयः केवलेन, चतुर्थोऽभिघातेनेति । अत्र पक्षे गर्भपातशोणितातिस्रावजौ केवलवातेन प्राप्तौ, एतेषां च मुहुर्मुहुराक्षेपणं बोध्यं, आक्षेपकविशेषत्वात् ॥ ३८ ॥—

‡गृहीत्वाऽर्धं तनोर्वायुः सिराः स्नायूर्विशोष्य च ॥ ३९ ॥
पक्षमन्यतरं हन्ति सन्धिबन्धान्विमोक्षयन् ।
कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः ॥ ४० ॥
एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः ।
सर्वाङ्गरोगस्तद्वच्च सर्वकायाश्रितेऽनिले ॥ ४१ ॥

पक्षवधमाह—गृहीत्वेत्यादि । अर्धमिति अर्धमर्यादयाऽर्धनारीश्वरवत् । पक्षं बाहुकक्षपार्श्वादिभाग, अन्यतरमिति वामं दक्षिणं वा । सन्धिबन्धान् कफसहितस्नायुभिर्बद्धान् मोक्षयन्निति गदाधरः; अत एव सिराः स्नायूर्विशोष्येत्युक्तम् । अर्धकाय इत्यु-

* 'केवलः स्वतन्त्रः' ( आ० द० ) ॥ ३७ ॥—

† 'असाध्यमाह—गर्भेत्यादि । अन्नापतानकेत्युपलक्षणं, तेन चतुष्टयमपि गृह्यते' ( आ० द० ) ॥ ३८ ॥

‡ 'वायुस्तनोः शरीरस्यार्धं गृहीत्वा, सिराः स्नायूर्विशोष्य शोषयित्वा, अन्यतरं पक्षं हन्ति निरीहं करोति । पक्षमिति शरीरार्धं । किं कुर्वन् ? संधीनां बन्धान् सन्धिबन्धान् विमोक्षयन्निति गदाधरः । तस्य तथाविधस्य पुंसः, कृत्स्नो निःशेष अर्धकायोऽकर्मण्यो विचेतनः स्यात् । केचिदाचार्यास्तं व्याधिमेकाङ्गरोग विदुः, अन्ये पक्षवधं विदुः । सर्वकायाश्रिते समस्तदेहगते वाते तत्सर्वाङ्गरोगमित्याहुः' ( आ० द० ) ॥ ३९-४१ ॥

केऽपि कृत्स्नग्रहणं युगपत् सर्वाङ्गव्याप्त्यर्थम् । अकर्मण्य ईषच्चेष्टाक्षमः । विचेतनोऽल्पचेतनः, ईषत्स्पर्शादिज्ञानवानित्यर्थः । तद्वच्चेत्यनेन सिराः स्नायूर्विशोष्य चेत्यादिसंप्राप्तिलक्षणं चातिदिशति ॥ ३९—४१ ॥

*दाहसन्तापमूर्च्छाः स्युर्वायौ पित्तसमन्विते ।
शैत्यशोथगुरुत्वानि तस्मिन्नेव कफान्विते ॥ ४२ ॥
शुद्धवातहतं पक्षं कृच्छ्रसाध्यतमं विदुः ।
साध्यमन्येन संयुक्तमसाध्यं क्षयहेतुकम् ॥ ४३ ॥

तस्यैव साध्यासाध्यज्ञानार्थमाह—दाहेत्यादि । एतच्च लक्षणमन्यत्रापि वातरोगे द्रष्टव्यं, अत एव सामान्येन वायाविति कृतवान् । शुद्धः केवलः । अन्येनेति कफेन पित्तेन वा । क्षयहेतुकमिति धातुक्षयकुपितशुद्धवातजमिति ॥ ४२ ॥ ४३ ॥

†उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि वा ।
हसतो जृम्भतो वाऽपि भाराद्विषमशायिनः ॥ ४४ ॥
शिरोनासौष्ठचिबुकललाटेक्षणसन्धिगः ।
अर्दयत्यनिलो वक्त्रमर्दितं जनयत्यतः ।
वक्रीभवति वक्त्रार्धं ग्रीवा चाप्यपवर्तते ॥ ४५ ॥
शिरश्चलति वाक्सङ्गो नेत्रादीनां च वैकृतम् ।
ग्रीवाचिबुकदन्तानां तस्मिन्पार्श्वे च वेदना ॥ ४६ ॥
(यस्याग्रजो रोमहर्षो वेपथुर्नेत्रमाविलम् ।
वायुरूर्ध्वं त्वचि स्वापस्तोदो मन्याहनुग्रहः ॥)
तमर्दितमिति प्राहुर्व्याधिं व्याधिविचक्षणाः ।

अर्दितमाह—उच्चैरित्यादि । अर्दयति पीडयति । अपवर्तते वक्रीभवति । चलति कम्पते । वाक्सङ्गोऽनिर्गमो वचनस्य । आदिशब्देन भ्रूगण्डादीनां ग्रहणम् । वैकृतं वेदनास्फुरणवक्रत्वादिकम् । ग्रीवेत्यादि, यस्मिन् पार्श्वेऽर्दितं तस्मिन् ग्रीवादीनां वेदनेति योज्यम् । तन्त्रान्तरे तु मुखार्धवच्छरीरार्धव्यापकोऽप्यर्दितः पठितः । यदाह दृढबलः,— "अर्धे तस्मिन् मुखार्धे वा केवले स्यात्तदर्दितम्" ( च. चि. स्था. अ. २८ )—इति । ननु, यद्येवं तदाऽर्दितार्धाङ्गवातयोः को भेदः ? उच्यते, वेगित्वेनार्दिते कदाचिद्वेदना भवति, अर्धाङ्गवाते [illegible] सर्वदैवेति भेदः; अथवा यथोक्तः सर्वलिङ्गोऽर्दितस्तद्विपरीतस्त्वर्धाङ्गवात इत्याहुः । सुश्रुतेन तु मुखमात्र एवार्दितः पठितः, अर्धशरीरस्यार्धाङ्गवातेन लब्धत्वात् । स एवात्र माधवेन लिखितः ॥ ४४–४६—

* 'पक्षाघातस्य साध्यासाध्यत्वं दर्शयन्नाह—शुद्धेत्यादि । कृच्छ्रसाध्यं कष्टसाध्यं' ( आ० द० ) ॥ ४२ ॥ ४३ ॥

† 'अर्दितस्य निदानपूर्वकं लक्षणमाह—उच्चैरित्यादि । उच्चैर्भाषणं, कठिनानि पूगफलादीनि खादतः, विषमाच्छयनात् ग्रीवादिवैपरीत्यशयनात्, ग्रीवां व्याप्य अपवर्तते वक्रीभवति, आदिशब्देन गण्डनासादीनां ग्रहणं, चिबुकं मुखकुहरस्याधोभागः' (आ० द०) ॥४४–४६॥

*क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिणः ॥ ४७ ॥
न सिध्यत्यर्दितं गाढं त्रिवर्षं वेपनस्य च ।

तस्यासाध्यलक्षणमाह—क्षीणस्येत्यादि । अनिमिषाक्षस्य निमेषासमर्थचक्षुषः । प्रसक्ताव्यक्तभाषिण इति प्रसक्तं प्रकर्षेण सक्तमप्रवृत्तं, अव्यक्तं प्रपीडितवर्णपदं भाषितुं शीलं यस्य स तथा । अन्ये तु प्रसक्तं निरन्तरमाहुः; तन्न, चरके "दीना जिह्वा समुत्क्षिप्ता कले सज्जति चास्य वाक्" ( च. चि. स्था. अ. २८ )—इति वचनात् । त्रिवर्षमिति अतीतवर्षत्रयं, अथवा त्रयाणां मुखनासाचक्षुषां वर्षः स्रवणं यत्र तत्तथेत्याहुः ॥ ४७ ॥—

गते वेगे भवेत् स्वास्थ्यं सर्वेष्वाक्षेपकादिषु ॥ ४८ ॥

आक्षेपकादीनामर्दितान्तानां वेगित्वमाह—गत इत्यादि । स्वास्थ्यं पीडालाघवं, भारापगमे सुखित्वव्यपदेशवत् ॥ ४८ ॥

†जिह्वानिर्लेखनाच्छुष्कभक्षणादभिघाततः ।
कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनुम् ॥ ४९ ॥
करोति विवृतास्यत्वमथवा संवृतास्यताम् ।
हनुग्रहः स तेन स्यात्कृच्छ्राच्चर्वणभाषणम् ॥ ५० ॥

हनुग्रहमाह—जिह्वेत्यादि । हनुमूलस्थः कपोलमूलस्थः । हनुं स्रंसयित्वाऽधः कृत्वा । विवृतास्यत्वमास्यविवृतिं, संवृतास्यतामास्यसंवृतिं; सा च वायोरनियतकारित्वात् ॥ ४९ ॥ ५० ॥

‡दिवास्वप्नासनस्थानविवृतोर्ध्वनिरीक्षणैः ।
मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणाऽऽवृतः ॥ ५१ ॥

मन्यास्तम्भमाह—दिवास्वप्नेत्यादि । स एवेति वातः ॥ ५१ ॥

वाग्वाहिनीसिरासंस्थो जिह्वां स्तम्भयतेऽनिलः ।
जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता ॥ ५२ ॥

जिह्वास्तम्भमाह—वागित्यादि । वाग्वाहिनीसिरासंस्थ इति वाग्वाहिनी या सिरा तत्र संस्थ इति योऽर्थः, समासपक्षे "पुंवत् कर्मधारयजातीयदेशीयेषु–" इत्यनेन पुंवद्भावप्राप्तेः । अन्नपानवाक्येष्वनीशतेति अन्नपानाभ्यवहारवचनेष्वसामर्थ्यम् ॥५२॥

* 'प्रसक्तेति प्रकर्षेण सक्तं स्खलनयुक्तं कण्ठताल्वादिवर्णोच्चारणस्थानेषु वेपनस्य कम्पनशीलस्य' ( आ० द० ) ॥ ४७ ॥—

† 'जिह्वानिर्लेखनात् जिह्वाघर्षणाद्दन्तकाष्ठादिना, शुष्काणां चणकादीनां भक्षणात् अभिघाततश्चाहननात् । विवृतास्यत्वं प्रसारितवदनत्वं, संवृतास्यत्वं संकुचितमुखत्वम्; अत्र संवृतिर्विवृतिश्च वायोरनियतकारित्वात् । स एव वातः कुपितः हनुग्रहः । तेन कृच्छ्राच्चर्वणं भाषणं च स्यात्' ( आ० द० ) ॥ ४९ ॥ ५० ॥

‡ 'आसनमुपवेशः, स्थानमूर्ध्वभवनं, विवृतोर्ध्वनिरीक्षणं वक्रमार्गावलोकनम् । स एवेति वातो दिवास्वप्नादिभिः कुपितः सन्, श्लेष्मणाऽऽवृतो मन्यास्तम्भं प्रकुरुते, मन्यास्तम्भं केचिदपतानकपूर्वरूपं मन्यन्ते' ( आ० द० ) ॥ ५१ ॥

१ 'हनुस्तम्भः' इति पा० । २ 'कपोलस्थः' इति क. ।

रक्तमाश्रित्य पवनः कुर्यान्मूर्धधराः सिराः।
रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्यात्सिराग्रहः ॥ ५३ ॥

सिराग्रहमाह—रक्तमित्यादि। मूर्धधरा इति ग्रीवागताः, तासां रूक्षत्वं वेदनावत्त्वं कृष्णत्वं च कुर्यात्। सोऽसाध्य इति स्वरूपेणैव, काकणकुष्ठवत्। शिरोग्रह इति पाठान्तरे शिरोधारकसिरादुष्ट्या शिरोवेदनाकारित्वात् 'शिरोग्रह' इति व्यपदेशः, लक्षणं तु तदेव ॥ ५३ ॥

*स्फिक्पूर्वा कटिपृष्ठोरुजानुजङ्घापदं क्रमात्।
गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः ॥ ५४ ॥
वाताद्वातकफात्तन्द्रागौरवारोचकान्विता।
†[वातजायां भवेत्तोदो देहस्यापि प्रवक्रता।
जानुकट्यूरुसंधीनां स्फुरणं स्तब्धता भृशम् ॥ ५५ ॥
वातश्लेष्मोद्भवायां तु निमित्तं वह्निमार्दवम्।
तन्द्रा मुखप्रसेकश्च भक्तद्वेषस्तथैव च ॥ ५६ ॥]

गृध्रसीमाह—स्फिक्पूर्वेत्यादि। स्फिक् पूर्वा प्रथमतो यस्याः स्तम्भरुक्तोदैर्यस्याः सा स्फिक्पूर्वा; ईशानस्तु पूर्वा प्रथमा गृध्रसी वातादिति योजयति, एषा च व्याख्या स्फिक्शब्दस्य नपुंसकत्वेन 'पूर्वां स्फिक्कटीपृष्ठ'—इत्यादिपाठेन नोपपद्यते नान्यथा। 'स्फिक्पूर्वं' इति पाठान्तरं जानुजङ्घापदमित्यनेन योज्यम्। क्रमादिति न युगपत्। वातादिति छेदः। वातकफारब्धा गृध्रसी, केवलवातलक्षणयुक्ताऽपि तन्द्रागौरवादियुक्ता भवतीति गृध्रसीद्वयमुक्तम् ॥ ५४ ॥ ५६ ॥

‡तलं प्रत्यङ्गुलीनां याः कण्डरा बाहुपृष्ठतः ॥ ५७ ॥
बाह्वोः कर्मक्षयकरी विश्वाची चेति सोच्यते।

विश्वाचीमाह—तलमित्यादि। तलं हस्तस्योपरिभागः, तलशब्दोऽत्रोपरिवचनः, यथा—भूतलमिति गयदासः। तेनायमर्थः—बाह्वोः पृष्ठं बाहुपृष्ठं, तत आरभ्य हस्ततलं लक्षीकृत्याङ्गुलीनां याः कण्डरास्ताः संदूष्य बाह्वोः कर्मक्षयकरी या सा विश्वाची; बाह्वोः कर्म ग्रहणाकुञ्चनादि, द्वित्वं चात्र संभवपरं, तेनैकबाहावपि भवति पादखञ्जवत्। विश्वाची चेति चकारेण गृध्रसीविश्वाच्योः खल्लीसंज्ञां दर्शयति, तयोरपि करमूलावमोटनकारित्वात्; यदुक्तं हारीते,—"विश्वाची गृध्रसी चोक्ता खल्ली तीव्ररुजान्विता"—इति गयदासः। चक्रस्त्वाह चरके—'खल्ली तु पादजङ्घोरुकरमूलावमोटनी' (च. चि. स्था. अ. २८)-इत्यनेन विश्वाच्याः पृथगेव खल्ली पठिता, गृध्रसीत्वेन तु खल्ली न

---

* 'गृध्रसी स्तम्भरुक्तोदैः क्रमात् कटिपृष्ठोरुजानुजङ्घापदं गृह्णाति, तथा मुहुः स्पन्दते, सा वातजा ज्ञेया, एवंभूता गृध्रसी, स्फिक्पूर्वा। गृध्रसी रहिन्नीति लोके (मा० द०) ॥ ५४ ॥

† 'गृध्रस्याः पुनरपि विशेषमनुगमाह—वातजायामित्यादि। सुगमम्' (मा० द०) ॥ ५५ ॥ ५६ ॥

‡ कण्डरा महास्नायुः' (मा० द०) ॥ ५७ ॥

पठितैव, नहि तेन तन्त्रान्तरोक्तसर्वविकाराः पठ्यन्ते, चरकोक्तपरस्परवातावरणलक्षणमेव न पठितं, हारीतेन तु तीव्ररुजायोगाद्गृध्रसीविश्वाच्यो खल्लीत्वं पठितं, भवति हि धर्मान्तरयोगात् कस्यचिद्विकारस्य रोगान्तरत्वं, तथा—अष्ठीलैव प्रत्यष्ठीला, अश्मयेव शर्करा, पाण्डुरोग एव कामलेत्यादि ॥ ५७ ॥—

*वातशोणितजः शोथो जानुमध्ये महारुजः ॥ ५८ ॥
ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलः क्रोष्टुकशीर्षवत् ।

क्रोष्टुकशीर्षमाह—वातेत्यादि । वातशोणितज इति वातरक्ताख्यविकारज, चिकित्साभेदार्थं पृथक् पठित इति गयदासः । वातशोणिताभ्यां जात इति जेज्जटः । दृश्यते ह्ययं वातरक्तव्यतिरेकेणापि, जानुदेशनियतत्वेन विशिष्टलक्षणत्वेन चेतरवातरक्ताद्भेद इति । क्रोष्टुकशीर्षवत् शृगालमस्तकवत् स्थूलः ॥ ५८ ॥—

†वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा ॥ ५९ ॥
खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ।

खञ्जमाह—वायुरित्यादि । सक्थ्नः ऊर्ध्वजङ्घायाः, कण्डरा महास्नायुः, आक्षिपेत् ईषत् क्षिपेत्, किञ्चिद्धरतिमत्त्वादिति गयदासः । सक्थ्नोरिति द्विवचनेनैव द्वित्वे लब्धे द्वयोरिति पदेन नियमयति,—सक्थिद्वयस्यैव वधात् पङ्गुः, एकसक्थिवधात् खञ्ज इति, वधश्चात्र गमनादिक्रियानाशः ॥ ५९ ॥

‡प्रक्रामन् वेपते यस्तु खञ्जन्निव च गच्छति ॥ ६० ॥
कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ।

खञ्जविशेषमाह—प्रक्रामन्नित्यादि । प्रक्रामन्निति गमनमारभमाणो वेपते । प्रशब्दोऽत्रादिकर्मणि । खञ्जन्निव गच्छति विकलयन्निव गच्छति, गमनारम्भे न वेपते तेन खञ्जादस्य भेदः । मुक्तसन्धिप्रबन्धनमिति शिथिलीकृतसन्धिबन्धनम् । कलायखञ्ज इति शास्त्रे रूढा संज्ञा, अयमेवान्यत्र कलायभक्षणात् इत्युक्तः ॥ ६० ॥

रुक् पादे विषमन्यस्ते श्रमाद्वा जायते यदा ॥ ६१ ॥
वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ।

वातकण्टकमाह—रुगित्यादि । यदा विषमपादन्यासकुपितः श्रमकुपितो वा वायुर्गुल्फे वेदनां जनयति, तं वातकण्टकमित्याहुः, अयमेवान्यत्र खुडुकवात इत्युक्तः ॥ ६१ ॥

§पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ॥ ६२ ॥
विशेषतश्चङ्क्रमतः पाददाहं तमादिशेत् ।

---

* 'वातशोणिताभ्यां जातो वातशोणितजः न पुनर्वातरक्ताख्यव्याधिना जनितः । जानुरूरुजङ्घयोः सन्धिः, स्थौल्येन आकृत्या च क्रोष्टुशिरोवत्' (आ० द०) ॥ ५८ ॥

† 'खञ्जपङ्गुत्वमाह—वायुरित्यादि । यदा कट्यां स्थितो वायुः सक्थ्नः कण्डरामाक्षिपेत्तदा जन्तुः खञ्जो भवति । पङ्गुः सक्थ्नोर्द्वयोर्वधादिति सर्वथा गतिविघातात् पङ्गुरित्यर्थः' (आ० द०) ॥ ५९ ॥

‡ 'कलायखञ्जमाह—प्रक्रामन्नित्यादि । प्रक्रामन् पादनिक्षेपं कुर्वन्, वेपते कम्पते' (आ० द०) ॥ ६० ॥

§ 'विशेषतश्चङ्क्रमतः विशेषेण चलतः' (आ० द०) ॥ ६२ ॥

पाददाहमाह—पादयोरित्यादि । विशेषतश्चङ्क्रमत इत्यनेन स्थितस्य मन्दो दाह इति दर्शयति । वैवर्ण्यादिरसवाद्वातरक्तादस्य भेदः ॥ ६२ ॥

हृष्येते चरणौ यस्य भवेतां चापि सुप्तकौ ॥ ६३ ॥
पादहर्षं स विज्ञेयः कफवातप्रकोपतः ।

पादहर्षमाह—हृष्येते इत्यादि । हृष्येते हर्षयुक्तौ भवत , हर्षश्च रोमाञ्चप्रायोऽन्त-र्गतो झिंझिनिविद्धवेदनाविशेष इत्याहु , झिंझिनि तु न चिरानुबन्धिनी केवल-वातजेति भेदः ॥ ६३ ॥

*अंसदेशस्थितो वायुः शोषयेदंसबन्धनम् ॥ ६४ ॥

अंसेत्यादि । अंसेत्यादिना श्लोकार्धेनांसशोष केवलवातज उच्यते । अंसबन्ध-कारक श्लेष्मा अंसबन्धन', एतदनन्तरं 'अंसशोषं जनयेत्' इति शेष इति वार्तिक' ॥ ६४ ॥

†सिराश्चाकुञ्च्य तत्रस्थो जनयेदवबाहुकम् ।

अवबाहुकमाह—सिराश्चेत्यादिना । तत्रस्थोंऽसदेशस्थ , सिरा आकुञ्च्यावबाहुक जनयेत् । अयं वातकफज । अन्ये तु मिलितावंसावबाहुकलक्षणमाहु', तन्न, यत सुश्रुतेनोक्तम् ,—"अंसशोषावबाहुकयोर्बाहुमध्ये सिराव्यध" (सु शा स्था अ ८) —इति । एतदनन्तरं सुश्रुतेन बाधिर्यं पठित,–' यदा शब्दवह वायु "(सु नि स्था. अ १)—इत्यादिना, माधवेन तु प्रकरणानुरोध मन्यमानेन कर्णरोग एव तत् पठित, किंतु सुश्रुतेन वातव्याधौ बाधिर्यं पठित्वाऽपि बाधिर्यंकर्णशूलौ शालाक्येऽपि पठितौ, पुनरुक्तमिति चेत्, न, सम्प्राप्तिभेदमित्यत्वात् , वातव्याधौ शब्दवहमित्यनेन कर्णशष्कुल्यवच्छिन्ननभोदेश उक्त , शालाक्ये च शब्दवहा सिरा इत्युक्तम् । माध-वेन तु कर्णरोगे शब्दाश्रवणत्वाविशेषादेतदेव तत्र पठितमित्यविरोध ॥—

‡आवृत्य वायु सकफो धमनी' शब्दवाहिनी' ॥ ६५ ॥
नरान्करोत्यक्रियकान्मूकमिन्मिनगद्गदान् ।

मूकादीनाह—आवृत्येत्यादि । अक्रियकान् अवचनक्रियकान् , नञ्मलमभावे इषदर्थे च । आद्यो मूकोऽवचन , द्वितीयो मिन्मिन सानुनासिकसवदवचन , तृतीयो गद्गदो लुप्तपदव्यक्त्यभिधायी । एषा च समानकारणाभिधानेऽपि दुष्टदूष्यादिभिरदृ-ष्टवशाद्वा भेद इत्युन्नेयम् ॥ ६५ ॥—

§अधो या वेदना याति वर्चोमूत्राशयोत्थिता ॥ ६६ ॥
भिन्दतीव गुदोपस्थं सा तूनी नाम नामतः ।

---

* 'अथश्लोकेनांसशोषलक्षणमाह–अंसेत्यादि । अंसशब्देनांससमीपोपलक्षितदेशोऽ सदेश । असौ बाहुशिर, तत्र स्थितो व्यवस्थित । अंसबन्धनमिति अंसबन्धनकारक श्लेष्मा अंसबन्धन , तत्रांसबन्धन श्लेष्माण शोषयित्वा' ( आ० द० ) ॥ ६४ ॥

† अयं च कफवातज । 'अत्रांसशोषमवबाहुकमिति रोगद्वयमुक्तवान्' (आ० द०) ॥—

‡ 'मूकादीन् जिह्वागतान् वातरोगान्सीनाह–आवृत्येत्यादि । वायु सकफ कुपित सन्, शब्दवाहिनीधमनीरावृत्यावरुध्य, नरानक्रियकान् करोति' ( आ० द० ) ॥ ६५ ॥

§ 'या वेदना शूलमथ इति गुदोपस्थ याति, नामत सा तूनी नाम, भिन्दतीव गुदोपस्थमिति भेद कुर्वतीव गुदोपस्थमित्यर्थ ' ( आ० द० ) ॥ ६६ ॥

तूनीमाह—अध इत्यादि । अध इति गुदोपस्थम् । वेदना शूलम् । वर्चोमूत्राशयोत्थिता पक्वाशयमूत्राशयोत्थिता, पक्वाशयमूत्रपुटयोर्व्यस्तसमस्तयोर्जाता । उपस्थं स्त्रीपुंसयोर्गुह्यम् । नामतः प्रसिद्धितः ॥ ६६ ॥—

*गुदोपस्थोत्थिता या तु प्रतिलोमं प्रधाविता ॥ ६७ ॥
वेगैः पक्वाशयं याति प्रतितूनीति सोच्यते ।

प्रतितूनीमाह—गुदेत्यादि । प्रतिलोममित्यूर्ध्वम् । वेगैर्वातकृतोद्गमैः । सैलनेन भिन्दतीवेत्यतिदिश्यते ॥ ६७ ॥

†साटोपमत्युग्ररुजमाध्मातमुदरं भृशम् ॥ ६८ ॥
आध्मानमिति तं विद्याद्घोरं वातनिरोधजम् ।
विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम् ॥ ६९ ॥
प्रत्याध्मानं विजानीयात्कफव्याकुलितानिलम् ।

आध्मानमाह—साटोपमित्यादि । साटोपमिति आटोपश्चलचलनमिति गयदासः, गुडगुडाशब्द इति कार्तिकः । आध्मातं वातपूर्णचर्मपुटकस्थानीयम् । उदरमिति पक्वाशयः, प्रत्याध्मानस्यामाशयसंभवत्वात् । घोरमिति कष्टप्रदम् । आमाशयसमुत्थत्वेन प्रत्यासन्नयोः पार्श्वहृदययोरपि वेदनाशङ्कानिरासार्थमाह—विमुक्तेत्यादि । तदेवेत्यनेन साटोपादित्वमतिदिशति । कफव्याकुलितानिलं कफावृतवातम् ॥ ६८ ॥ ६९ ॥—

‡नाभेरधस्तात्संजातः संचारी यदि वाऽचलः ॥ ७० ॥
अष्ठीलावद्घनो ग्रन्थिरूर्ध्वमायत उन्नतः ।
वाताष्ठीलां विजानीयाद्बहिर्मार्गावरोधिनीम् ॥ ७१ ॥
एतामेव रुजोपेतां वातविण्मूत्ररोधिनीम् ।
प्रत्यष्ठीलामिति वदेज्जठरे तिर्यगुत्थिताम् ॥ ७२ ॥

अष्ठीलामाह—नाभेरित्यादि । अष्ठीला उत्तरापथे वर्तुलः पाषाणविशेष इति जेज्जटमतानुसारी कार्तिकः, कर्मकाराणां वर्तुला दीर्घा लोहभाण्डीति गयदासः । ऊर्ध्वमायत उपरिदीर्घः । उन्नतस्तिर्यगुन्नतः । वातकृता अष्ठीला वाताष्ठीलेति सरूपपदे, व्यापारस्याभावात् । बहिर्मार्गावरोधिनी वातमूत्रपुरीषावरोधिनीम् । एतामित्यादि सैव जठरे तिर्यगुत्थिता तिर्यगायता प्रत्यष्ठीलेति भेदः । वातविण्मूत्ररोधिनीमिति विशेषपरम् ॥ ७० ॥–७२ ॥

* 'गुदोपस्थोत्थिता सैव वेदना प्रतिलोमं प्रधाविता सती वेगैर्वातकृतोद्गमैर्दुर्धर्षैः समावोपक्रमोपरश्चितैः पक्वाशयं याति, सा प्रतितूनीत्युच्यते' ( आ० द० ) ॥ ६७ ॥

† 'आटोपादिस्थगत्युग्रमुदरमाध्मातं जानीयात्; साटोपमिति आटोपश्चलनं तेन सह वर्तत इति साटोपमिति गयदासः । प्रत्याध्मानमाह—विमुक्तेत्यादि । विमुक्तं पार्श्वहृदयं येन तत्तथा' ( आ० द० ) ॥ ६८ ॥ ६९ ॥

‡ 'अष्ठीलावत् अष्ठिलासदृशं ग्रन्थिं वाताष्ठीलां विजानीयात् । घनं दृढमायतम्, ( आ० द० ) ॥ ७०–७२ ॥

*मारुतेऽनुगुणे बस्तौ मूत्रं सम्यक् प्रवर्तते ।
विकारा विविधाश्चात्र प्रतिलोमे भवन्ति च ॥ ७३ ॥

अष्ठीलाव्यतिरिक्तामपि वातविकृतिं मूत्ररोधिनीमाह—मारुत इत्यादि । अनुगुणेऽनुलोमे, प्रतिलोमे मारुत इति संबन्धः । विकारा अश्मरीमूत्रकृच्छ्रादयः ॥ ७३ ॥

†सर्वाङ्गकम्पः शिरसो वायुर्वेपथुसंज्ञकः ।

वेपथुवातविकारमाह—सर्वेत्यादि । शिरसः कम्प इति संबन्धः, शिर इत्यवयवोपलक्षणं, तेन हस्तादेरपि कम्पो वेपथुरित्यर्थः ॥—

‡खल्ली तु पादजङ्घोरुकरमूलावमोटनी ॥ ७४ ॥
( §अधः प्रतिहतो वायुः श्लेष्मणा मारुतेन वा । ·
करोत्युद्गारबाहुल्यमूर्ध्ववातः स उच्यते ॥ ७५ ॥ )

खल्लीत्यादि । खल्ली शिरावमोटन इति लोके । "अधः प्रतिहतो वायुः श्लेष्मणा मारुतेन च । करोत्युद्गारबाहुल्यमूर्ध्ववातं प्रचक्षते" इत्यनाधिकं केचित् पठन्ति ॥ ७४ ॥ ७५ ॥

$स्थाननामानुरूपैश्च लिङ्गैः शेषान्विनिर्दिशेत् ।
सर्वेष्वेतेषु संसर्गं पित्ताद्यैरुपलक्षयेत् ॥ ७६ ॥
हनुस्तम्भार्दिताक्षेपपक्षाघातापतानकाः ।
· कालेन महता वाता यत्नात्सिध्यन्ति वा न वा ॥ ७७ ॥
नरान् बलवतस्त्वेतान् साधयेन्निरुपद्रवान् ।

अनुक्तवातरोगसंग्रहार्थमाह—स्थानेत्यादि । स्थानानुरूपैर्लिङ्गैर्यथा—कुक्षिशूलं, नगभेद इत्यादि । नामानुरूपैर्लिङ्गैर्यथा—दण्डमियुक्ते कीलनिपातवद्वेदनाविशेष एवोच्यते, तथा भेदतोदादिभिरपि पीडाविशेष एव गम्यते । वाता इति वातविकाराः, कार्यकारणयोरभेदोपचारात्, वातादिति पाठे तु वाताचे हनुस्तम्भादय इति योज्यम् ॥ ७६ ॥ ७७ ॥—

¶विसर्पदाहरुक्सङ्गमूर्च्छारुच्यग्निमार्दवैः ॥ ७८ ॥
क्षीणमांसबलं वाता घ्नन्ति पक्षवधादयः ।
शूनं सुप्तत्वचं भग्नं कम्पाध्माननिपीडितम् ।
रुजार्तिमन्तं च नरं वातव्याधिर्विनाशयेत् ॥ ७९ ॥

---

* 'अनुगुणेऽनुलोमे मारुत इत्यर्थः' ( आ० द० ) ॥ ७३ ॥

† 'सर्वाङ्गकम्पवातमाह—सर्वाङ्गेत्यादि । सर्वाङ्गस्य शिरसश्च कम्प इति संबन्धः' ( आ० द० ) ॥—

‡ 'खल्लीमाह—खल्लीत्यादि । मोटनीति परिवर्तनशीला' ( आ० द० ) ॥ ७४ ॥

§ 'ऊर्ध्ववातमाह—अध इति' ( आ० द० ) ॥ ७५ ॥

$ 'पित्ताद्यैरिति पित्तश्लेष्मरक्तैः संसर्गं द्विदोषं सन्निपातं च लक्षयेत् । एषां रोगाणां कृच्छ्रसाध्यत्वमाह—हन्वित्यादि । यत्नेनैव सिध्यन्त्युक्त इत्यर्थः । यद् वा तिसृणां ? वैलक्षण्यो भवति । तथा निरुपद्रवान् बलवद्देहिनान्' ( आ० द० ) ॥ ७६ ॥ ७७ ॥—

¶ 'सङ्गो मूत्रपुरीषवातरोधः । क्षीणं मांसबलं यस्य स तथा । भग्नं भग्नास्थि । रुजार्तिमन्तमतीव पीडयमानम्' ( आ० द० ) ॥ ७८ ॥ ७९ ॥

---

१ पाठ 'नरांस्तु बलवतेतान्' इति पाठान्तरेण ।

वातोपद्रवानाह—विसर्पेत्यादि । वाता इति वातविकाराः, कार्यकारणयोरभेदोपचारात् । वातादिति पाठे तु वातात् पक्षवधादय इति योज्यम् । शूनमित्यादि शूनं सशोथम् । सुप्तत्वचं स्पर्शानभिज्ञत्वगिन्द्रियम् ॥ ७८ ॥ ७९ ॥

अव्याहतगतिर्यस्य स्थानस्थः प्रकृतिस्थितः ।
वायुः स्यात्सोऽधिकं जीवेद्वीतरोगः समाः शतम् ॥ ८० ॥

इति श्रीमाधवकरविरचिते माधवनिदाने वातव्याधिनिदानं समाप्तम् ॥२२॥

इदानीं पञ्चविधस्यापि प्रकृतिस्थस्य वायोर्लिङ्गं कार्यं चाह—अव्याहतेत्यादि । यस्येति पुरुषस्य, अव्याहतगतिरनवरुद्धमार्गः, स्थानस्थः स्वाश्रयव्यवस्थितः, प्रकृतिस्थितोऽक्षीणधाप्रवृद्धः, एतद्विशेषणत्रयं हेतुहेतुमद्भावेन योज्यम् । वीतरोगो नीरोगः कफपित्तदुष्टेरपि प्रेरकत्वात्तेनान्तरीयकत्वात् । अधिकं समाः शतमिति पञ्च दिनाधिकं सविंशं वर्षशतम् । यदाह वराह आयुर्निरूपणे,—"समाः षष्टिर्द्विघ्ना मनुजकरिणां पञ्च च निशा."—इत्यादि ॥ ८० ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां वातव्याधिनिदानं समाप्तम् ॥२२॥

---

## अथ वातरक्तनिदानम् ।

*लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनैः ।
क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः ॥ १ ॥
कुलत्थमाषनिष्पावशाकादिपललेक्षुभिः ।
दध्यारनालसौवीरशुक्ततक्रसुरासवैः ॥ २ ॥
विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः ।
प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ।
स्थूलानां सुखिनां चापि कुप्यते वातशोणितम् ॥ ३ ॥

वातव्याधिविशेषत्वात्तदनन्तरं वातरक्तमाह । ननु, सुश्रुते वातरोगाध्याय एव वातरक्तं पठितं तत् कुतोऽत्र संग्रहे पृथक् पाठः ? उच्यते, सत्यपि वातरोगत्वे निदानवैशिष्ट्याद्विशिष्टदोषदूष्यख्यापनार्थं हस्तादिदेश एव संप्राप्तिकथनार्थं क्रियाविशेषख्यापनार्थं च पृथक्करणम् । अत एव चरकेऽपि वातव्याध्यनन्तरं पृथग्वातरक्ताधिकारः । ननु, रजस्तीव्रा सर्वतापा इत्यादिना रक्तगतस्य वातस्य लक्षणं वातव्याधावेवोक्तं, ततश्च वातरक्ताभिधानं पुनरुक्तं स्यात्; नैवं, वातरक्तं हि दुष्टेन वातेन दुष्टेन

* 'तस्य निदानमाह—लवणेत्यादि । लवणादिभिर्भोजनैः, तथा क्लिन्नशुष्काम्बुजादिभिः, तथा कुलत्थादिभिः, तथा दध्यादिभिः, तथा विरुद्धादिभिः, तथा प्रायशः सुकुमाराणां पुंसां, तथा मिथ्याहारविहारिणां स्थूलानां सुखिनां च वातरक्तं प्रकुप्यति । क्लिन्नं पर्युषितं, अम्बुजा मत्स्यादयः, आरनालादयः काञ्जिकभेदाः, सुरा विष्टिका, आसवो मद्य, पललं क्षीरमत्स्यादि, अध्यशनं भुक्तोपरिभोजनं, स्थूला मेदस्विनः, सुखिनश्च सम्पद्व्यापादिवर्जिताः' ( मा० द० ) ॥ १-२ ॥

रक्तेन च विशिष्टसंप्राप्तिकं विकारान्तरमेव । उक्तं हि चरके,—"वायुः प्रवृद्धो वृद्धेन रक्तेनावारितः पथि । क्रुद्धः संदूषयेद्रक्तं तज्ज्ञेयं वातशोणितम्" ( च. चि. स्था. अ.२९)—इति । रक्तगतवाते तु वात एव दुष्टो रक्तमदुष्टमेव गच्छतीति भेदः । लवणाम्लेत्यादि, क्लिन्नशुष्कशब्दौ मांसेन संबध्येते । पिण्याकस्तिलकल्कः । निष्पावः शिम्बि., पललं मांसम् । प्रायश इत्यादि, सुकुमारा मृदुदेहावयवाः, तेषामल्पचेष्टत्वाल्लवणादिभी रक्तं कटुतिक्तप्रजागरादिभिश्च वातः कुप्यतीतीशानः ॥ १-३ ॥

*हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च विदाह्यन्नं स विदाहोऽशनस्य ।
कृत्स्नं रक्तं विदहत्याशु तच्च स्रस्तं दुष्टं पादयोश्चीयते तु ।
तत्संपृक्तं वायुना दूषितेन तत्प्राबल्यादुच्यते वातरक्तम् ॥ ४ ॥

संप्राप्तिमाह—हस्त्यश्वेत्यादि । हस्त्यादिगमनं वातवृद्धौ विशेषेण रक्तस्य द्रवस्याधोगमनेऽपि हेतुः, विदाह्यन्नं च शोणितवृद्धौ । हस्त्यादिगमनं विशेषेण, पादेनापि गमनं हेतुरेव । तद्रक्तम् । संपृक्तं वायुना दूषितेन स्वहेतुदुष्टेन । तत्प्राबल्यादिति द्वयोर्दुष्टत्वेऽपि वातस्य प्राबल्याद्दोषत्वेन प्राधान्याद्वातरक्तव्यपदेशः, न तु रक्तवात इति ॥ ४ ॥

†स्वेदोऽत्यर्थं न वा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽतिरुक् ।
सन्धिशैथिल्यमालस्यं सदनं पिडकोद्गमः ॥ ५ ॥
जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु ।
निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव च ॥ ६ ॥
कण्डूः सन्धिषु रुग्भूत्वा भूत्वा नश्यति चासकृत् ।
वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक्पूर्वलक्षणम् ॥ ७ ॥

पूर्वरूपमाह—स्वेदेत्यादि । स्वेदोऽत्यर्थं नवेति धर्मागमनमत्यर्थं भवति सर्वथा वा न भवति, एतच्च व्याधिमहिम्ना कुष्ठवत् । क्षतेऽतिरुगिति यदि कारणान्तरात् क्षतं स्यात्तदाऽतिशयं रुजा स्यात्, तद्देशस्य दुष्टत्वात् ॥ ५-७ ॥

‡वातेऽधिकेऽधिकं तत्र शूलस्फुरणभञ्जनम् ।
शोथस्य रौक्ष्यं कृष्णत्वं श्यावताबृद्धिहानयः ॥ ८ ॥
धमन्यङ्गुलिसन्धीनां संकोचोऽङ्गग्रहोऽतिरुक् ।
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ॥ ९ ॥

---

* 'विदाहि विरूढकादिकम् । अश्नतो भुञ्जानस्य, शस्त्रभारादिगुरुतरकर्माणि निदहति, हस्त्यादिगमनं तथा विषमपादेनापि गमनं हेतुः । तदसिद्धमिति दुष्टं सिद्धमित्यर्थः । दूषितेनासृजाऽऽपृक्तमिति दूषितेन रक्तेन मिश्रं, तथा दुष्टः श्लेष्मा दूषितेन रक्तेनाऽऽसौ मिश्रः' ( आ० द० ) ॥ ४ ॥

† 'कार्ष्ण्यं मलिनत्वम् । सदनमवसादः । पिडिकाप्रादुर्भावो जान्वादिषु, निस्तोदः पीडाविशेषः, सुप्तिरस्पर्शः, वैवर्ण्यं निष्प्रभता, पूर्वरूपं वातरक्तस्य' (आ० द०) ॥५-७॥

‡ 'तत्र जान्वादिस्थानेषु शूलादिकं वेद्यं, तथा शोथस्य रौक्ष्यादिकं वृद्धिहानयश्च विशेषाः, धमन्यादीनां संकोचः । शीतद्वेषः, अनुपशयः शीतेन रोगवृद्धिः । स्तम्भित-

रक्ते शोथोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते ।
स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः ॥ १० ॥
पित्ते विदाहः संमोहः स्वेदो मूर्च्छा मदस्तृषा ।
स्पर्शासहत्वं रुग्रागः शोथः पाको भृशोष्मता ॥ ११ ॥
कफे स्तैमित्यगुरुतासुप्तिस्निग्धत्वशीतताः ।
कण्डूर्मन्दा च रुग्द्वन्द्वं सर्वलिङ्गं च संकरात् ॥ १२ ॥

वातरक्तस्य दोषान्तरसंसर्गेण लक्षणमाह—वातेऽधिक इत्यादि । वृद्धिहानय इति वातरक्तलक्षणानाम् । रक्त इत्यादि । रक्त इत्यत्र 'अधिक' इत्यनुवर्तनीयं, एवं वक्ष्यमाणपित्तादिषु । एतच्चारम्भकत्वादन्यदूष्यान्तरं बोध्यं, रक्तमपि रक्तान्तरदूषकं भवति । यदुक्तं दुष्टरक्तलक्षणे,—"पित्तवद्‌रूपेणातिकृष्णं च (सु. सू. स्था. अ. १४)—"इति । शमं नैति शान्तिं न याति । कफ इत्यादि । द्वन्द्वसर्वलिङ्गं च संकरादिति संकरात् द्विदोषत्रिदोषमेलकात् द्वन्द्वलिङ्गं सर्वलिङ्गं च क्रमाद्वातरक्तं भवति ॥ ८-१२ ॥

*पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ।
आखोर्विषमिव क्रुद्धं तद्देहमुपसर्पति ॥ १३ ॥

पादयोर्जातमप्रतिक्रियमाणं देहान्तरं व्याप्नोति, पादवद्धस्तयोरपि भवतीति दर्शयन्नाह—पादयोरित्यादि । आखोर्विषमित्यनेन मन्दविसर्पितां दर्शितवान्; एतद्वातरक्तं चरकेण द्विविधमुक्तम् । यदाह—"उत्तानमथ गम्भीरं द्विविधं वातशोणितम् । त्वङ्मांसाश्रयमुत्तानं गम्भीरं त्वन्तराश्रयम्" (च. चि. स्था. अ. २९)—इति । सुश्रुतेन तु उत्तरोत्तरतो उत्तानस्योत्तरकाले गम्भीरत्वमुक्तमिति मतभेद एव ॥ १३ ॥

†आजानु स्फुटितं यच्च प्रभिन्नं प्रस्रुतं च यत् ।
उपद्रवैश्च यज्जुष्टं प्राणमांसक्षयादिभिः ॥ १४ ॥
वातरक्तमसाध्यं स्याद्याप्यं संवत्सरोत्थितम् ।
अस्वप्नारोचकश्वासमांसकोथशिरोग्रहाः ॥ १५ ॥
संमूर्च्छामदरुक्तृष्णाज्वरमोहप्रवेपकाः ।
हिक्कापाङ्गुल्यवीसर्पपाकतोदभ्रमक्लमाः ॥ १६ ॥
अङ्गुलीवक्रतास्फोटदाहमर्मग्रहार्बुदाः ।
एतैरुपद्रवैर्वर्ज्यं मोहेनैकेन वाऽपि यत् ॥ १७ ॥

लक्षणमाह—रक्त इत्यादि । कण्डूक्लेदौ शमं न यातः, क्लेदो द्रवत्वम् । पित्तविकारमाह—पित्त इत्यादि । भृशोष्मता संतापाधिक्यम् । कफविकारमाह—कफ इत्यादि । कफाधिके स्तैमित्यमार्द्रता, मन्दा अल्पवेदना, रुक् पीडा । द्वन्द्वसर्वलिङ्गमाह—द्वन्द्वमित्यादि' (आ० द०) ॥ ८-१२ ॥

* 'कदाचिदिति कस्मिंश्चित्काले । हस्तयोरपीति मूलमास्थाय' (आ० द०) ॥ १३ ॥

† 'प्रस्रुतं स्रावयुक्तम् । उपद्रवैरिति प्राणमांसक्षयादिभिः', उपद्रवानाह—अस्वप्नेत्यादि । मांसकोथो मांसपचनम् । मूर्च्छनं मूर्च्छा । [illegible]

१ अत्र 'मूर्च्छास्वेदमदस्तृष्णा' इति पाठान्तरेण ।

सश्लेष्ममेद पवन इति सश्लेष्ममेदश्चासौ पवनश्चेति सश्लेष्ममेद पवन इति विग्रह । इतर दोष पित्तम् । अस्यां सम्प्राप्तौ वातस्य प्राधान्यमुक्त, अत एव सुश्रुतेन महावात-व्याधावयं रोग पठित । चरके तु कफस्य प्राधान्यमुक्तम् । यदाह,—"ऊरू श्लेष्मा समेदस्को वातपित्तेऽभिभूय तु" ( च नि स्था० अ २७ )—इत्यादि । तत्र चरके आवरकस्य श्लेष्मण प्राकृचिकित्स्यत्वेन प्राधान्य, आरम्भकत्वेन च सुश्रुते पवनस्येति न विरोध । परकीयाविचेत्यनेनात्क्षेपणगमनादिष्वप्रभुत्वं दर्शयति । ध्यानादि-भिर्ज्वरान्तैरुपलक्षित 'पुरुष' इति शेष ॥ १–५ ॥

*प्राग्रूपं तस्य निद्राऽतिध्यानं स्तिमितता ज्वरः ।
रोमहर्षोऽरुचिश्छर्दिर्जङ्घोर्वोः सदनं तथा ॥ ६ ॥
वातशङ्किभिरज्ञानात्तस्य स्यात्स्नेहनात्पुनः ।
पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥ ७ ॥
जङ्घोरुग्लानिरत्यर्थं शश्वच्चादाहवेदने ।
पादं च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च ॥ ८ ॥
संस्थाने पीडने गत्यां चालने चाप्यनीश्वरः ।
अन्यस्येव हि संभग्नावूरू पादौ च मन्यते ॥ ९ ॥
†यदा दाहार्तितोदार्तो वेपनः पुरुषो भवेत् ।
ऊरुस्तम्भस्तदा हन्यात्साधयेदन्यथा नवम् ॥ १० ॥

इति श्रीमाधवकरविरचिते माधवनिदाने ऊरुस्तम्भनिदान समाप्तम् ॥ २४ ॥

अनुपशयमाह—वातेत्यादि । वातशङ्किभिरिति सुप्तिभङ्गोचकम्पादिवातरोगसदृश-लिङ्गदर्शनात्तच्छङ्किभि । अज्ञानादनिश्चयात्, मोहादितीशान । तत्रोपशयानुपशयज्ञानार्थं स्नेहन, यदुक्त चरके,—"गूढलिङ्ग व्याधिमुपशयानुपशयाभ्या परीक्षेत" (च नि. स्था अ ४ )—इति, तत्र स्नेहनादनुपशयो भवतीत्याह—पादयोरित्यादि । उद्धर-णमूर्ध्वचालनम् । आदाहवेदने इति आङ् ईषदर्थे, अन्ये त्वीषदर्थं एव नगमाहु, उद्भूतदाहस्यासाध्यत्वेन वक्ष्यमाणत्वात् । 'आनाहवेप(द)ने' इति पाठान्तरमयुक्त, चरकटीकाकारै सर्वैरव्याख्यातत्वात् । व्याधिस्वभावादय चोरुस्तम्भ एक एव त्रिदो-षारब्ध, नतु वातादिभेदादनेकविध । उक्त हि चरके व्याधिसंख्याया,—'एक एवोरुस्तम्भ' ( च. सू स्था अ १९ )—इति । संभग्नाविति संभग्नाविव संभग्नौ ॥ ७–१० ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायामूरुस्तम्भनिदान समाप्तम् ॥ २४ ॥

---

* 'अज्ञानाद् वातरोगोऽयमिति भ्रमात्, स्नेहनाद्भ्यञ्जनादे ' ( आ० द० ) ॥ ६ ॥ १ ॥

† 'असाध्यत्वमाह—यदेत्यादि । अन्यथेति पूर्वोक्तपद्ये रहितं चोरुस्तम्भमात्रमेव' ( आ० द० ) ॥ १० ॥

*एकदोषानुगः साध्यो द्विदोषो याप्य उच्यते ।
सर्वदेहचरः शोथः स कृच्छ्रः सान्निपातिकः ॥ १२ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने आमवातनिदानं समाप्तम् ॥ २५ ॥

तस्य साध्यत्वादिकमाह—एकेत्यादि ॥ १२ ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायामामवातनिदानं समाप्तम् ॥ २५ ॥

---

## अथ शूलपरिणामशूलान्नद्रवशूलनिदानम् ।

दोषैः पृथक् समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत् ।
सर्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः ॥ १ ॥

आमवातेऽपि शूलं भवतीत्यतस्तदनन्तरं शूलनिदानम् । ज्वरादिवच्छूलस्यापि प्रागुत्पत्तिरस्ति । यदाह हारीतः,—"अनङ्गनाशाय हरस्त्रिशूलं मुमोच कोपान्मकरध्वजस्य । तमापतन्तं सहसा निरीक्ष्य भयार्दितो विष्णुतनुं प्रविष्टः ॥ स विष्णुहुङ्कारविमोहितात्मा पपात भूमौ प्रथितः स शूलः । स पञ्चभूतानुगतं शरीरं प्रदूषयत्यस्य हि पूर्वसृष्टिः'—इति । एतेन शूल( लि )संभवत्वादस्य शूलमिति संज्ञा, शूलनिखातवद्वेदनाजनकत्वाच्च । तदाह वृद्धसुश्रुतः,—"शङ्कुस्फोटनवत्तस्य यस्मात्तीव्रा हि वेदना । शूलासक्तस्य भवति तस्माच्छूलमिहोच्यते" ( सु. उ. तं अ. ४२ )—इति । कफपित्तादिशूलेष्वप्ययं भावी वायुरित्याह—सर्वेष्वित्यादि । प्रभुः कर्ता ॥ १ ॥

†व्यायामयानादतिमैथुनाच्च प्रजागराच्छीतजलातिपानात् ।
कलायमुद्गाढकिकोरदूषादत्यर्थरूक्षाध्यशनाभिघातात् ॥ २ ॥
कषायतिक्तातिविरूढजान्नविरुद्धवल्लूरकशुष्कशाकात् ।
विट्शुक्रमूत्रानिलवेगरोधाच्छोकोपवासादतिहास्यभाष्यात् ॥ ३ ॥
वायुः प्रवृद्धो जनयेद्धि शूलं हृत्पार्श्वपृष्ठत्रिकवस्तिदेशे ।
जीर्णे प्रदोषे च घनागमे च शीते च कोपं समुपैति गाढम् ॥ ४ ॥
मुहुर्मुहुश्चोपशमप्रकोपी विड्वातसंस्तम्भनतोदभेदैः ।
संस्वेदनाभ्यञ्जनमर्दनाद्यैः स्निग्धोष्णभोज्यैश्च शमं प्रयाति ॥ ५ ॥

---

* 'साध्यासाध्यत्वमाह—एकदोषानुग इत्यादि । सुगमम्' ( आ० द० ) ॥ १२ ॥

† 'व्यायामो मल्लयुद्धादि, यानं तुरगरथादि, मैथुनं स्त्रीसेवा, प्रजागरं रात्रौ, एतानु-योगात्; कलायस्त्रिपुटः, अत्यर्थं रूक्षान्नसेवा, अध्यशनं भुक्तस्योपरि भोजनं, अभिघातो लोष्टादिभिः, कषायतिक्तरससेवा, शुष्कशाकं प्रसिद्धम् । शोके बन्धुवियोगाद्, उपवासोऽभोजनं, अतिहास्योऽट्टहासः, अतिभाष्यं बहुभाषणं, एतैः कारणैर्वृद्धो वायुः शूलं कुर्यात् । स्थानसंश्रयमाह—हृत् हृदयं, पार्श्वं, पृष्ठं, त्रिक [त्रिक]कटिसंधिः स्थान-

---

१ 'वायोः प्राधान्य' ( आ० द० ) ।

वातिकमाह—व्यायामेत्यादि । शीतजलातिपानाच्छीतलजलस्य प्रभूतपानात् आढकी तुवरी, कोरदूष कोद्रव, विरूढजातमङ्कुरितधान्यकृतमन्न, विरुद्ध क्षीर-मत्स्यादिक, वल्लूरं शुष्कमांसम् । यद्यपि सर्वैरेव वातकोपनैर्वातशूलं स्यात्तथाऽपि व्यायामादिपाठेनैतद्दर्शयति,—व्यायामादयो यथा वातहेतवस्तथा शूलहेतवोऽपीति, दोषव्याधिहेतव इत्यर्थः । एव पित्तशूलादिषु द्रष्टव्यम् । जीर्णे इत्याहारे । घनागमे वर्षासु, मेघोदये च । मुहुर्मुहुरुपशमप्रकोपौ वायोश्चलत्वेन ॥ २–५ ॥

*क्षारातितीक्ष्णोष्णविदाहितैलनिष्पावपिण्याककुलत्थयूषैः ।
कट्वम्लसौवीरसुराविकारैः क्रोधानलायासरविप्रतापैः ॥ ६ ॥
ग्राम्यातियोगादशनैर्विदग्धैः पित्तं प्रकुप्याशु करोति शूलम् ।
तृण्मोहदाहार्तिकरं हि नाभ्यां संस्वेदमूर्च्छाभ्रमचोषयुक्तम् ॥ ७ ॥
मध्यन्दिने कुप्यति चार्धरात्रे विदाहकाले जलदात्यये च ।
शीते च शीतैः समुपैति शान्तिं सुस्वादुशीतैरपि भोजनैश्च ॥ ८ ॥

पैत्तिकमाह—क्षारेत्यादि । क्षारो यवक्षारादि मुष्ककादिकृतक्षारद्रव्यं च, तीक्ष्णोष्ण मरिचराजिकादि, विदाहि वंशकरीरादि, तैल तिलविकृति, निष्पाव शिम्बि, पिण्याको नि स्नेह सर्षपादिकल्क, कुलत्थयूषोऽत्र कुलत्थान्नपानोपलक्षण । सौवीरं सन्धानविशेष । रविप्रतापो रौद्र । ग्राम्यातियोगो मैथुनातिसेवा । विदाहीति पूर्वं पठितवाऽपि अशनैर्विदग्धैरित्यनेनाविदाहिवस्तुनोऽपि दोषवशेन विदाहित्व दर्शितम् । यदाह सुश्रुत,—"स्रोतस्स्रवहे पित्तमथो वा यस्य तिष्ठति । विदाहि भुक्तमन्यद्वा तस्याप्यन्न विदह्यते" ( सु सू स्था अ ४६ )—इति । विदाहकाल इत्याहारस्य । जलदात्यये शरदि ॥ ६–८ ॥

स्यात्, बस्तिर्मूत्राशय । प्रदोषे सन्ध्यासमये, शीते शीतकाले, पतेष्वधिक प्रकोप प्रयाति । मुहुर्मुहुर्वारंवार प्रकोपोपशमौ भवत । विड्वातसंस्तम्भनतोदभेदैरिति पुरीषादीना यदा स्तम्भस्तदा प्रकोप, यदा च तेषा प्रवृत्तिस्तदोपशम, भेदोऽभिघात इव, पतदुपलक्षणम् । यदा तोदभेदौ तदा प्रकोप । उपशममाह—संस्वेदनादिभि शम शान्ति प्रयाति स्निग्धोष्णभोजनैश्च' ( आ॰ द॰ ) ॥ ५ ॥

* 'कटु कटुरस, अम्लश्च, सौवीर काञ्जिक, सुराविकार शालिषष्टिकपिष्टै कृत मद्य सुरा तस्या विकार, पुनर्नवाशालिपिष्टै कृता श्वेतसुरा, बिभीतकत्वक्शालितण्डुलपिष्टैस्तु वैभीतिकी सुरेत्यादि । क्रोध कोप, अनलो वह्निसेवा, आयास अशक्यारि कर्म, रविप्रतापोऽतिघर्म । एभि कारणैर्दुष्ट पित्त शूल जनयेत् । तृट् तृषा, मोहो नष्टचित्तता, दाह प्रसिद्ध । नाभ्यां पित्तशूलस्य स्थानत्वात् । स्वेदादय प्रसिद्धा, चोष्यत इव वेदनाविशेष, एतैर्युक्तम् । मध्यन्दिनेऽर्धरात्रे च कोपं याति । विदाहकाल आहारस्य पाकावस्थिक, 'निदाघकाले' इति पाठान्तरम् । शीते शीतवीर्यैः. सुस्वादुशीतैर्मधुरशीतभोजनैश्च शान्ति गच्छति' ( आ॰ द॰ ) ॥ ६–८ ॥

*आनूपवारिजकिलाटपयोविकारै-
मांसेक्षुपिष्टकृशरातिलशष्कुलीभिः ।
अन्यैर्बलासजनकैरपि हेतुभिश्च
श्लेष्मा प्रकोपमुपगम्य करोति शूलम् ॥ ९ ॥
हृल्लासकासस‍दनारुचिसंप्रसेकै-
रामाशये स्तिमितकोष्ठशिरोगुरुत्वैः ।
भुक्ते सदैव हि रुजं कुरुतेऽतिमात्रं
सूर्योदयेऽथ शिशिरे कुसुमागमे च ॥ १० ॥

श्लैष्मिकमाह—आनूपेत्यादि । आनूपवारिजं मांसादिकं, किलाटं तक्रकूर्चिका, कृशरा तिलतण्डुलमाषयवागूः । सूर्योदये प्रातः । कुसुमागमे वसन्ते ॥९-१०॥

†सर्वेषु दोषेषु च सर्वलिङ्गं विद्याद्भिषक् सर्वभवं हि शूलम् ।
सुकष्टमेनं विषवज्रकल्पं विवर्जनीयं प्रवदन्ति तज्ज्ञाः ॥ ११ ॥
‡आटोपहृल्लासवमीगुरुत्वस्तैमित्यकानाहकफप्रसेकैः ।
कफस्य लिङ्गेन समानलिङ्गमामोद्भवं शूलमुदाहरन्ति ॥ १२ ॥

आमशूलमाह—आटोपेत्यादि । कफस्य लिङ्गेन कफशूलोक्तलिङ्गेन ॥ ११ ॥ १२ ॥

§बस्तौ हृत्पार्श्वपृष्ठेषु स शूलः कफवातिकः ।
कुक्षौ हृन्नाभिमध्येषु स शूलः कफपैत्तिकः ॥ १३ ॥
दाहज्वरकरो घोरो विज्ञेयो वातपैत्तिकः ।

वातपैत्तिकश्चरकोक्तवातपैत्तिकशूलस्थाने द्रष्टव्यः । एवं सान्निपातिकोऽपि हृद्रोगप्रकरणस्थाने । मधुकः—"वातात्मकं बस्तिगतं वदन्ति, पित्तात्मकं चापि

*'आनूपमांसं अनूपदेशचारिणां मांसं, वारिजं मत्स्यादीनां जलचराणां मांसं, किलाटं तक्रकूर्चिका, अन्ये तु नवप्रसूतमहिषीक्षीरस्य घनतामाहुः, पयोविकारः पायसदध्यादि । मांसं ग्राम्यमांसं, इक्षुरिति इक्षुविकाराः, पिष्टमिति पिष्टान्नं, एतैः श्लेष्मजनकैः श्लेष्मा प्रकोपं प्राप्य शूलं कुर्यात् । उपद्रवानाह-हृल्लासेत्यादि । हृल्लासः उपस्थितवमनमिव, सदनं गात्रभङ्गः, संप्रसेको लालास्रावः । आमाशये रुजं कुरुते इति योजना । स्तिमितकोष्ठो गुरूकोष्ठता, एतेषु कालेष्विति विशेषेण कुर्यादिति' (आ० द०) ॥ ९ ॥ १० ॥

† 'सान्निपातिकमाह-सर्वेष्वित्यादि । त्रिदोषाणां लिङ्गैर्युक्तं त्रिदोषजं जानीयात् । सुकष्टमसाध्यम् । विषवज्रतुल्यं मारकत्वात्' (आ० द०) ॥ ११ ॥

‡ 'आटोपो गुडगुडाशब्दः, वमिः, गुरुत्वं, स्तैमित्यं, उदरे आनाहः अन्नापानयोः निरोधः, कफप्रसेकः कफस्रावः । कफस्य लिङ्गेनेति श्लैष्मिकशूलोक्तलिङ्गेनामोद्भवं शूलमुदाहरन्ति' (आ० द०) ॥ १२ ॥

§ 'द्वन्द्वजमाह-बस्तावित्यादि । बस्तौ मूत्राशये, पार्श्वे.... । कफपैत्तिकमाह-कुक्षावित्यादि । कुक्षिरुदरे । वातपैत्तिकमाह-दाहेत्यादि । दाहज्वरकरः, घोरो दारुणः' (आ० द०) ॥ १३ ॥ १४ ॥

१ इन्दुः 'विषवज्रकल्पम्' इति पाठमिच्छति ।

यदन्ति नाभ्याम् । हृत्पार्श्वकुक्षौ कफसन्निविष्टं, सर्वेषु देशेषु च सन्निपातात्"—इति ॥ १३ ॥—

एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः ॥ १४ ॥
सर्वदोषोत्थितो घोरस्त्वसाध्यो भूर्युपद्रवः ।

* साध्यत्वादिलक्षणमाह—एकेत्यादि । भूर्युपद्रव इति । उपद्रवास्तु वेदनादय । यदुक्तं,—"वेदना च तृषा मूर्च्छा ह्यानाहो गौरवारुची । कास श्वासश्च हिक्का च शूलस्योपद्रवा स्मृता "—इति ॥ १४ ॥—

*स्वैर्निदानैः प्रकुपितो वायुः संनिहितस्तदा ॥ १५ ॥
कफपित्ते समावृत्य शूलकारी भवेद्बली ।
भुक्ते जीर्यति यच्छूलं तदेव परिणामजम् ॥ १६ ॥
तस्य लक्षणमप्येतत्समासेनाभिधीयते ।

परिणामशूलमाह—स्वैरित्यादि । अस्य च त्रिदोषजस्यापि नियतपरिणामकालसम्भवत्वेन पित्तोल्बणत्व द्रष्टव्यम् । यदुक्तमन्यत्र,—"बलास प्रच्युत स्थानात्पित्तेन सह मूर्च्छित । वायुमादाय कुरुते शूल जीर्यति भोजने ॥ कुक्षौ जठरपार्श्वेषु नाभौ बस्तौ स्तनान्तरे । पृष्ठमूलप्रदेशेषु सर्वेष्वेतेषु वा पुन ॥ भुक्तमात्रेऽथवा मान्द्ये जीर्णेऽन्ने च प्रशाम्यति । षष्टिकव्रीहिशालीनामोदनेन विवर्धते ॥ तत्परिणामज शूलं दुर्विज्ञेय महागदम् । तमाहु रसवाहानां स्रोतसा दुष्टिहेतुकम् ॥ केचिदन्नद्रव प्राहुरन्ये तत्पक्तिदोषत । पक्तिशूल वदन्त्येके केचिदन्नविदाहजम्"—इति । भुक्ते जीर्यत्याहारे पच्यमाने ॥ १५ ॥ १६ ॥—

†आध्मानाटोपविण्मूत्रविबन्धारतिवेपनैः ॥ १७ ॥
स्निग्धोष्णोपशमप्रायं वातिकं तद्वदेद्भिषक् ।
तृष्णादाहारतिस्वेदं कट्वम्ललवणोत्तरम् ॥ १८ ॥
शूलं शीतशमप्रायं पैत्तिकं लक्षयेद्बुधः ।
छर्दिहृल्लाससंमोहं स्वल्परुग्दीर्घसन्तति ॥ १९ ॥
कटुतिक्तोपशान्तं च तच्च ज्ञेयं कफात्मकम् ।
संसृष्टलक्षणं बुद्ध्वा द्विदोषं परिकल्पयेत् ॥ २० ॥
त्रिदोषजमसाध्यं तु क्षीणमांसबलानलम् ।

---

* 'स्वै कारणै' कुपितो बलवान् वात सन्निहितो निकटे यदोभे कफपित्ते समावृत्य व्याप्य तिष्ठति तदा शूलकारी भवेत् । तस्य सामान्यलक्षणमाह—भुक्त इति' (आ० द०) ॥ १५ ॥ १६ ॥

† 'वातिकमाह—आध्मानेत्यादि । आध्मान ध्मातमिव वातेनोदरपूरणम् । आटोपो गुडगुडाशब्दवत्, विण्मूत्रयोरप्रवृत्ति, अरति. सुखाभाव, वेपन कम्प । स्निग्धैरुष्णैश्च शान्ति भवेत् । पैत्तिकमाह—तृष्णेत्यादि । आहारे पच्यमाने । श्लैष्मिकमाह—छर्दीत्यादि । स्वल्पा रुग्यस्मिन्, कटुतिक्तै रसैरुपशममेति । द्विदोषजसान्निपातिकमाह—संसृष्टेत्यादि । क्षीणं मांसं बलमनलो वह्निर्येन तत् क्षीणमांसबलानलम्' (आ० द०) ॥ १७–२० ॥

तस्य वातादिभेदेन लक्षणान्याह—आध्मानेत्यादि । तृष्णादाहारतिखेदा यत्र सन्ति तत्तृष्णादाहारतिखेदम् । कट्वम्ललवणोत्तरं कट्वम्ललवणैर्वृद्धम् । शीतशमप्रायं शीतलोपशम(य)बहुलम् । छर्दिहृल्लाससंमोहलिङ्गानि यस्मिन् सन्ति तच्छर्दिहृल्लाससंमोहम् । दीर्घसन्ततीति चिरानुबन्धि ॥ १७–२० ॥—

*जीर्णे जीर्यत्यजीर्णे वा यच्छूलमुपजायते ॥ २१ ॥
पथ्यापथ्यप्रयोगेण भोजनाभोजनेन च ।
न शमं याति नियमात्सोऽन्नद्रव उदाहृतः ॥ २२ ॥
( अन्नद्रवाख्यशूलेषु न तावत्स्वास्थ्यमश्नुते ।
वान्तमात्रे जरत्पित्ते शूलमाशु व्यपोहति ॥ १ ॥ )

इति श्रीमाधवकरविरचिते माधवनिदाने शूलपरिणामशूलान्नद्रव-
शूलनिदानं समाप्तम् ॥ २६ ॥

त्रिदोषविकृतिविशेषमन्नद्रवाख्यं शूलमाह—जीर्णे इत्यादि । जीर्णे 'आहारे' इति शेषः, एवं जीर्यत्यजीर्णे चेत्यत्र; सर्वदेत्यर्थः । न शमं याति नोपशेत इत्यर्थः; न त्वसाध्यं, चिकित्साविधानादिति ॥ २१–२२ ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां शूलनिदानं समाप्तम् ॥ २६ ॥

---

## अथोदावर्तानाहनिदानम् ।

†वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियाः ।
क्षुत्तृष्णोच्छ्वासनिद्राणां धृत्योदावर्तसंभवः ॥ १ ॥

उदावर्तेऽपि शूलं भवतीति शूलानन्तरमुदावर्तमाह—वातेत्यादि । अश्रमश्रु, इन्द्रियशब्देनात्र शुक्रं, क्षुत् बुभुक्षा । धृत्या वेगविधारणेन । एते वातादयस्त्रयोदश नियमार्थाः, तेनान्येषां क्रोधादीनां वेगविधारणं न तद्धेतुः, स्वास्थ्यहेतुत्वात् । यदाह चरकः,–"लोभशोकभयक्रोधमानवेगान् विधारयेत्" ( च. सू. स्था. अ. ७ )–इत्यादि । सर्वोदावर्तेषु च वायुरेव कारणम् । यदाह सुश्रुतः,–"सर्वेष्वेतेषु विधिवदुदावर्तेषु कृत्स्नशः । वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये" ( सु. उ. तं. अ. ५५ )–इत्यादि । उद्गतेन वेगविधारणेनावृतस्य वायोर्वर्तनमित्युदावर्तनिरुक्तिः; अन्ये तु वायोरूर्ध्वमावर्तो गमनमित्युदावर्तमाहुः; तन्न, अश्रुक्षवादेरव्यापकत्वात्; छत्रिणो गच्छन्तीति न्यायेन वा समाधेयम् ॥ १ ॥

---

* 'जीर्यति पच्यमाने, पक्वेऽपि भुक्ते न शान्तिं गच्छति । प्रायेण त्रिदोषशरीरस्यासाध्यम्' ( आ० ८० ) ॥ २१ ॥ २२ ॥

† 'एतेषां धृत्या वेगविधारणेन । अश्रु बाष्पम्, इन्द्रियं शुक्रम्, इन्द्रियम्' ( आ० ८० ) ॥ १ ॥

*वातमूत्रपुरीषाणां सङ्गो ध्मानं क्लमो रुजा ।
जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात् ॥ २ ॥
आटोपशूलौ परिकर्तिका च सङ्गः पुरीषस्य तथोर्ध्ववातः ।
पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य ॥ ३ ॥
बस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा ।
विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥ ४ ॥
मन्यागलस्तम्भशिरोविकारा जृम्भोपघातात्पवनात्मकाः स्युः ।
तथाऽक्षिनासावदनामयाश्च भवन्ति तीव्राः सह कर्णरोगैः ॥ ५ ॥
आनन्दजं वाऽप्यथ शोकजं वा नेत्रोदकं प्राप्तममुञ्चतो हि ।
शिरोगुरुत्वं नयनामयाश्च भवन्ति तीव्राः सह पीनसेन ॥ ६ ॥
मन्यास्तम्भः शिरःशूलमर्दितार्धावभेदकौ ।
इन्द्रियाणां च दौर्बल्यं क्षवथोः स्याद्विधारणात् ॥ ७ ॥
कण्ठास्यपूर्णत्वमतीव तोदः कूजश्च वायोरथवाऽप्रवृत्तिः ।
उद्गारवेगेऽभिहते भवन्ति घोरा विकाराः पवनप्रसूताः ॥ ८ ॥
कण्डूकोठारुचिव्यङ्गशोथपाण्ड्वामयज्वराः ।
कुष्ठहृल्लासवीसर्पाश्छर्दिनिग्रहजा गदाः ॥ ९ ॥
मूत्राशये वै गुदमुष्कयोश्च शोथो रुजा मूत्रविनिग्रहश्च ।
शुक्राश्मरी तत्स्रवणं भवेच्च ते ते विकारा विहते च शुक्रे ॥ १० ॥
तन्द्राङ्गमर्दावरुचिः श्रमश्च क्षुधाभिघातात्कृशता च दृष्टेः ।
कण्ठास्यशोषः श्रवणावरोधस्तृष्णाविघाताद्धृदये व्यथा च ॥ ११ ॥
श्रान्तस्य निश्वासविनिग्रहेण हृद्रोगमोहावथवाऽपि गुल्मः ।
जृम्भाऽङ्गमर्दोऽक्षिशिरोतिजाड्यं निद्राभिघातादथवाऽपि तन्द्रा ॥

*अपानवातस्य धारणात्, आध्मानं ध्मानमिवोदरे, सङ्गोऽप्रवृत्तिः, क्लमोऽनायासश्रमः, रुजा उदरे, पुरीषावरोधजमाह—आटोपेत्यादि । पुरीषवेगे धारिते सत्याटोपः सशब्द गुडगुडाशब्दः । शूलमिति पक्वाशये, परिकर्तिका कर्तनवद्व्यथा, सङ्गः पुरीषस्याप्रवृत्तिः, ऊर्ध्ववात उद्गारबाहुल्यं, अथवा मुखात्पुरीषनिर्गमनमूर्ध्ववातादेव । मूत्रनिग्रहजमाह—बस्तीत्यादि । मूत्रनिग्रहे मूत्रनिधारणे सति, बस्तौ मूत्राशये, मेहने मेढ्रे, व्यथा, मूत्रकृच्छ्रं-मन्दमन्दं कष्टेन मूत्रप्रवर्तनं, वङ्क्षणयोरूरुसन्ध्योः, आनाहः पूर्णत्वम् । जृम्भाघातजमाह—मन्येत्यादि । रुक्, मन्याकण्ठयोः स्तम्भ, शिरोरोगाः पवनजाः, तथाऽक्षिनासादीनां पवनजा रोगाः स्युः, तीव्रा दारुणाः, तथा कर्णरोगाः स्युर्जृम्भाविधारणात् । अश्रूदावर्तमाह—आनन्दजमित्यादि । नेत्रोदकमानन्दजनितं शोकजं वा द्विविधमपि रोचनजं, शिरोगुरुत्वादयो रोगाः पीनसेन सह तीव्रा जायन्ते । क्षवथूदावर्तमाह—मन्येत्यादि । क्षवथोरिति धारणात्, इन्द्रियाणां चक्षुरादीनां ग्रहणे दौर्बल्यं श्रवणनयननासानामयथार्थ विषयग्रहणम् । उद्गारोदावर्तमाह—कण्ठेत्यादि । उद्गारे विधारिते सति कण्ठमुखयोः पूर्णत्वमाहारेण, अतीव तोदो हृदयाशये वाऽत्यर्थव्यथा, छर्द्युदावर्तमाह—कोठे

उक्तानावाद्युदावर्तानां क्रमेण लक्षणमाह—वातेत्यादि । अन्ये इति तोदशूलादयः । मेहनं शेफः । विनाम आनाहपीडया ( बन्धनवत्पीडया ) नतगात्रत्वम् । वङ्क्षणयोरानाहो बन्धनवत्पीडा । नेत्रोदकमश्रु, प्राप्तमागतमभुञ्जतो 'नरस्य' इति शेषः । चकारात्तन्त्रान्तरोक्तप्रतिश्यायहृद्रोगारुचिप्रभृतीनां ग्रहणम् । अर्धावभेदोऽर्धशिर शूलम् । कूजोऽव्यक्तभाषणमिति कार्तिकः । वायोरप्रवृत्तिरुच्छ्वासनिरोध. । घोरा विकाराः पवनजा हिक्कादयः । मूत्राशये बस्तौ, 'मूत्रायन' इति पाठे स एवार्थः । वैशब्दः पादपूरणे । तत्क्षरणं शुक्रस्य स्यन्दनम् । अतिजाड्यं गौरवम् । "शिरोमनाक्षिगौरवं-" इति तन्त्रान्तरे पाठः ॥ २-१२ ॥

*वायुः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः ।
भोजनैः कुपितः सद्य उदावर्तं करोति हि ॥ १३ ॥
वातमूत्रपुरीषासृक्कफमेदोवहानि वै ।
स्रोतांस्युदावर्तयति पुरीषं चातिवर्तयेत् ॥ १४ ॥
ततो हृद्बस्तिशूलार्तो हृल्लासारतिपीडितः ।
वातमूत्रपुरीषाणि कृच्छ्रेण लभते नरः ॥ १५ ॥
श्वासकासप्रतिश्यायदाहमोहतृषाज्वरान् ।
वमिहिक्काशिरोरोगमनःश्रवणविभ्रमान् ।
बहूनन्यांश्च लभते विकारान् वातकोपजान् ॥ १६ ॥

---

वर्तीरष्टस्थानः, व्यङ्ग मुखलाञ्छन, शोथादयः प्रसिद्धाः । शुक्रोदावर्तमाह—मूत्राशय इत्यादि । मैथुनप्रवृत्तौ शुक्रविधारणात् । मूत्राशये बस्तौ, अन्ये 'मूत्रासने' इति पठन्ति, तत्र मूत्रमार्गे गुदमुष्कयोश्च श्वयथुः, तेष्वेव पीडा । मूत्रनिग्रहो मूत्राघातः, शुक्राश्मरीरोगः, ते विकारा इति वातकुण्डल्यादयः । क्षुदुदावर्तलक्षणमाह—तन्द्रेत्यादि । तन्द्रा निद्राभेदः, अङ्गमर्दोऽङ्गग्रहः, श्रमः कर्मेन्द्रियाणामसामर्थ्यं, दृष्टेः कृशता मान्द्यं, चकारात् कार्श्यदौर्बल्यादयस्तन्त्रान्तरोक्ता ग्राह्याः । तृडुदावर्तलक्षणमाह—कण्ठेत्यादि । श्रवणावरोधः शब्दस्याग्रहणमङ्गुल्यपिहित इव । श्वासोदावर्तलक्षणमाह—श्रान्तस्येत्यादि । श्रान्तस्य धावनादिना खिन्नस्य, निःश्वासविनिग्रहेण हृद्रोगादयो भवन्ति । हृद्रोगो हृदयविकारः, मोहो मूर्च्छा, गुल्मस्यापि संभवः । निद्रोदावर्तमाह—जृम्भेत्यादि । अक्ष्णोः शिरसि च जाड्यं गौरवम् । अन्ये 'जृम्भाऽङ्गमर्दोऽक्षिशिरोभिजाड्यम्' इति पठन्ति । तत्र 'शिरआदिगौरवम्' ( आ० द० ) ॥ २-१२ ॥

* 'कोष्ठानुगः कोष्ठशब्देन समस्तमुदरमध्यमुच्यते, रूक्षादिभिश्चणकराजमाषादिभिः, तथा कषायादिभी रसैः कुपितः । तस्य संप्राप्तिमाह—वातेत्यादि । ततः स्वैः कारणैः कुपितो वायुर्वातमूत्रादीनां स्रोतांस्युदावर्तयत्यूर्ध्वमावृणोति पुरीषं चातिवर्तयेत् । हृद्बस्तिशूलैस्तथा हृल्लासादिभिः पीडितः कृच्छ्रेण कष्टेन वातमूत्रपुरीषाणि लभते, वैषम्यतालाभमाप्नोतीत्यर्थः । श्वासादीनन्यांश्च वातप्रकोपजान् गदान् लभते । मनोविभ्रमः व्यागो पुरुषज्ञानमित्यादि, श्रवणविभ्रमो विपरीतश्रवणम्' ( आ० द० ) ॥ १३-१६ ॥

---

१ एतच्च—'शोथपाण्ड्वामयज्वरः' इति पाठाभिप्रायेण ।

वेगनिरोधजमुदावर्तमभिधाय रूक्षादिकुपितवातजमाह—वायुरित्यादि । उदावर्तयत्याप्नोति । अविवर्तयेच्छोषयेत् । कृच्छ्रेण लभत इति कष्टेन प्रवर्तयति । अत्र केचित् सुश्रुतोक्तमसाध्यलक्षणं पठन्ति,—"तृष्णार्दितं परिक्लिष्टं क्षीणं शूलैरुपद्रुतम् । शकृद्वमन्तं मतिमानुदावर्तिनमुत्सृजेत्" (सु. उ. तं अ. ५५)—इति ॥ १३–१६ ॥

*आमं शकृद्वा निचितं क्रमेण भूयो विबद्धं विगुणानिलेन ।
प्रवर्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्ति ॥ १७ ॥
तस्मिन् भवन्त्यामसमुद्भवे तु तृष्णाप्रतिश्यायशिरोविदाहाः ।
आमाशये शूलमथो गुरुत्वं हृत्स्तम्भ उद्गारविघातनं च ॥ १८ ॥
स्तम्भः कटीपृष्ठपुरीषमूत्रे शूलोऽथ मूर्च्छा शकृतश्च छर्दिः ।
शोथश्च पक्वाशयजे भवन्ति तथाऽलसोक्तानि च लक्षणानि ॥ १९ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने उदावर्तानाहनिदानं समाप्तम् ।

इदानीं विगुणानिलजत्वेन समानचिकित्सत्वेनानाहमाह—आममित्यादि । नेति पूर्वेण सम्बध्यते । छर्दिरित्येक एव छकारश्छन्दोऽनुरोधात् । स्तम्भशब्दः कट्यादेः स्तब्धतावाची, मूत्रपुरीषयोश्चाप्रवृत्तिवाची । अलसोक्तानीति आध्मानवातनिरोधादीनि ॥ १७–१९ ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायामुदावर्तानाहनिदानं समाप्तम् ॥

---

# अथ गुल्मनिदानम् ।

†दुष्टा वातादयोऽत्यर्थं मिथ्याहारविहारतः ।
कुर्वन्ति पञ्चधा गुल्मं कोष्ठान्तर्ग्रन्थिरूपिणम् ।
तस्य पञ्चविधं स्थानं पार्श्वहृन्नाभिबस्तयः ॥ १ ॥

---

* 'प्रवर्तमानं नेति पूर्वेण संबध्यते, तेनाप्रवर्तमानमित्यर्थः । यथास्वं स्व मार्गमित्यर्थः । एवमामं निचितं विगुणानिलेन विबद्धं सन्तं स्वमार्गे न प्रवर्तमानं शकृदेवंभूतमानाहं विकारमुदाहरन्तीति पिण्डार्थः । आमजमानाहमाह—तस्मिन्नित्यादि । तस्मिन्नानाहे आमसमुद्भवे तृष्णा संचितामजाता, गुरुत्वमामाशय एव, उद्गारविघातनमुद्गाराप्रवृत्तिः, शेषं सुगमम् । शकृत्सञ्चयजमाह—स्तम्भ इति । शूलोऽत्र कट्यादिष्वेव । पक्वाशयजे पक्वाशयोत्थ आनाह इति व्याख्यानयन्ति, ते च पक्वाशयोद्भव आनाहः पुरीषाद्भवतीति वदन्ति, तथाऽपि स पूर्वोक्त एव परिपठितोऽर्थः.' (आ० द०) ॥ १७–१९ ॥

† 'गुल्मस्य संप्राप्तिमाह—दुष्टा इत्यादि । दुष्टाः स्वकारणैर्मिथ्याहाराध्यशनादिभिः, मिथ्याविहारो वेगविधारणादिः । तेषां स्थानान्याह—तस्येत्यादि' (आ० द०) ॥ १ ॥

रसादिसप्तधातुगतमसूरिकालिङ्गमाह—तोयबुद्बुदसङ्काशा इत्यादि । अत्र दुष्टदूष्यप्रभावात्तोयबुद्बुदसङ्काशादीनि दोषलक्षणानि च भवन्ति, दोषमन्तरेण दूष्यदुष्टेरभावात्, अत एव वक्ष्यति,–'दोषमिश्राश्च सप्तैता द्रष्टव्या दोषलक्षणैः 'इति । त्वक्शब्देनात्र रसोऽभिधीयते, धातुगतप्रस्तावात् । त्वग्गता साध्या , अल्पदोषसम्बन्धाद्रक्तजाया अपि साध्यत्वेनाभिधानात् । मांसस्था कृच्छ्रसाध्या , अत्यवगाढदोषदुष्टेः । मेदोजाया कश्चिदाभ्यो विनिस्तरेदित्यनेनात्यन्तकृच्छ्रसाध्यत्वं बोधयति, अस्थिमध्यस्थितत्वान्मज्ज्ञः । सुप्ता इत्यादिना अस्थिमज्जगतयोः समानं लिङ्गम् । मज्जोत्था इत्यत्र मज्जग्रहणादस्थ्नोऽपि ग्रहणं, आधारत्वात्, अत एव वक्ष्यति,–'भ्रमरेणेव विद्धानि कुर्वन्त्यस्थीनि सर्वतः '–इति । मर्मधामानीति मर्मस्थानानि । पक्वाभा इत्यादिना शुक्रजाया लिङ्गम् । दृश्यते न तु जीवितमिति गम्भीरधातुगतदोषदुष्टेः शुक्रजाया असाध्यत्वम् । अस्य न्यायस्य समानतया अस्थिमज्जगतयोरप्यसाध्यत्वं बोद्धव्यम् ॥ १४–२३ ॥

*वातजा वातपित्तोत्थाः श्लेष्मवातकृताश्च याः ।
कृच्छ्रसाध्यतमास्तास्माद्यत्नादेता उपाचरेत् ॥ २४ ॥
असाध्याः सन्निपातोत्थास्तासां वक्ष्यामि लक्षणम् ।
प्रवालसदृशाः काश्चित् काश्चिज्जम्बूफलोपमाः ॥ २५ ॥
लोहजालसमाः काश्चिदतसीफलसंनिभाः ।
आसां बहुविधा वर्णा जायन्ते दोषभेदतः ॥ २६ ॥

वातजा इत्यादि । वातजाद्याः सन्निपातोत्थान्ता असाध्याः । एतासां समूर्छनविशेषजनितवक्ष्यमाणप्रवालादिवर्णयोगादसाध्यत्वं,तेनैतद्वर्णविरहे वातजायाश्चिकित्साविधिरप्युक्त उपपद्यत इति केचित् । अन्ये तु वातजाद्या एता खल्वत एवासाध्याः, चिकित्सोक्तिस्तु वातजादीनां महात्ययनिषेधार्थं, लिङ्गान्तरसम्भवार्थं च तासां वक्ष्यामि लक्षणमित्युक्तमित्याहुः । तासामिति असाध्यवातजादीनाम् लोहजालसमा इति जालं जालकं गुडकमिति यावत्, तद्वत्कृष्णवर्णाः । अतसीफलसनिभा इति उमापुष्पवर्णतुल्यवर्णाः । अनुक्तवर्णान्तरसंग्रहार्थमाह—आसां बहुविधा इत्यादि । दोषभेदत इति वातपित्तादिदोषविशेषात्, दुष्टिविशेषादित्यन्ये ॥ २४–२६ ॥

†कासो हिक्का प्रमेहश्च ज्वरस्तीव्रः सुदारुणः ।
प्रलापश्चारतिर्मूर्च्छा तृष्णा दाहोऽतिघूर्णता ॥ २७ ॥
मुखेन प्रस्रवेद्रक्तं तथा घ्राणेन चक्षुषा ।
कण्ठे घुर्घुरकं कृत्वा श्वसित्यत्यर्थवेदनम् ॥ २८ ॥
मसूरिकाभिभूतस्य यस्यैतानि भिषग्वरैः ।
लक्षणानि च दृश्यन्ते न दद्यात्तस्य भेषजम् ॥ २९ ॥

सर्वमसूरिकाया आवस्थिकं लिङ्गमाह—कास इत्यादि । ज्वरस्तीव्रः सुदारुण इति अत्र सुदारुण इति परेण संबध्यते, तेन सुदारुणः प्रलापः । अतिघूर्णता शिरो-

* 'दोषदूष्यसंमूर्छनादिविशेषेणैव स्पष्टमाह–प्रवालेत्यादि' (भा० ८०)॥ २४–२६॥
† 'मसोरदारिकासाम्। ज्वरस्तीव इति तीव्रोऽत्र। सुदारुणो घोर '(भा०८०)२७–२९॥

यनम्। तथा घ्राणेन चक्षुषेत्यत्र रक्तं स्रवेदिति संबध्यते। श्वसितीति श्वासो भवति ॥ २७–२९ ॥

*मसूरिकाभिभूतो यो भृशं घ्राणेन निःश्वसेत्।
स भृशं त्यजति प्राणान् तृषार्तो वायुदूषितः ॥ ३० ॥

सामान्येनासाध्यत्वमाह—मसूरिकाभिभूतो य इत्यादि। घ्राणेन निःश्वसेदिति मुखव्यतिरेकेण घ्राणेनैव निःश्वसेत्, सर्ववाक्यानामवधारणफलत्वात् ॥ ३० ॥

†मसूरिकान्ते शोथः स्यात् कूर्परे मणिबन्धके।
तथांऽसफलके चापि दुश्चिकित्स्यः सुदारुणः ॥ ३१ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने मसूरिकानिदानं समाप्तम् ॥ ५४ ॥

मसूरिकाया उपद्रवमाह—मसूरिकान्ते इत्यादि। दुश्चिकित्स्य इति दुःशब्दोऽयं निषेधे, तेनासाध्य इत्यर्थः ॥ ३१ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां मसूरिकानिदानं समाप्तम् ॥ ५४ ॥

---

## अथ क्षुद्ररोगनिदानम्।

‡स्निग्धाः सवर्णा ग्रथिता नीरुजो मुद्गसंनिभाः।
कफवातोत्थिता ज्ञेया बालानामजगल्लिकाः ॥ १ ॥

विसर्पादीनामक्षुद्रहेतुलक्षणचिकित्सितानामभिधानेन क्षुद्रहेतुलक्षणचिकित्सितानां क्षुद्ररोगाणां पारिशेष्यात् क्षुद्ररोगनिदानम्। ननु, यदि क्षुद्रत्वमेषां हेतुलक्षणचिकित्सा-ल्पत्वेन तर्हि अग्निरोहिणीकादीनां त्रिदोषत्वेन हेत्वादिबाहुल्यात् कथं क्षुद्रत्वं? नैवं, बाहुल्येन तावत्, छत्रिणो गच्छन्तीतिवत्; किंवा अवान्तरभेदविरहः क्षुद्रत्वं, येनात्र वक्ष्यमाणानामजगल्लिकादीनां न दोषदूष्यादिकृतभूरिसंख्याभेदेन व्रणज्वरादिवभि-देशः, किंतु प्रत्येकं स्तोकसंख्ययाऽभिधानं तेषाम्। अन्यस्त्वाह—क्षुद्रशब्दोऽत्र रौद्रे च वर्तते, तेन यथायोग्यं सर्वत्र व्यवस्था द्रष्टव्या; रौद्रे क्षुद्रशब्दो यथा—“क्षुद्रा मृगा यत्र शान्ताश्चेरुरन्यैः समं मृगैः”–इति। क्षुद्राणां बालानां रोगाः क्षुद्ररोगा इति

* 'यः प्रदूषितो मसूरिकाभिः पीडितो नरो भृशं तृषार्तो भवति, स तथाविधो नरः प्राणांस्त्यजति' ( आ० द० ) ॥ ३० ॥

† 'मसूरिकान्त इत्यादि। कूर्परे जानुकूर्परे, मणिबन्धने मुष्टिकायां, अंसफलके पार्श्व-योरुपरि' ( आ० द० ) ॥ ३१ ॥

‡ 'क्षुद्ररोगाणां मसूरिकारम्भकत्वादतोऽनन्तरं क्षुद्ररोगनिदानारम्भः। क्षुद्रा अल्पाः, निष्क-ल्पकाभिप्रायेण; अग्निरोहिणीवल्मीकप्रभृतीनामभिप्रायेण क्षुद्रास्तीक्ष्णाः, अथवा पूर्वा-चार्यपठिता पारिभाषिकीय संज्ञा, क्षयरोगसंज्ञावत्। सवर्णा शरीरसमवर्णा, ग्रथिताका-रत्वेन व्यवस्थिता। प्रायेण बालानामन्येषामप्यजगल्लिका भवति' ( आ० द० ) ॥ १ ॥

१ “वा प्रदूषिनः” इति पाठाभिप्रायेण।

केचित् । एवमप्यजगल्लिकादिपूतनादीनामेव परिग्रहो न त्वन्येषाम् । संक्षेपेण चतुश्चत्वारिंशद्विकारानत्र वक्तव्यान् क्रमेण दर्शयति—स्निग्धेत्यादि । भोजे तु मूषिकाकर्णमुष्ककोशफलाद्याः प्रकृतयोऽधिकविकाराः पठ्यन्ते, ते च सुश्रुते विकारस्थानन्त्यादनुमता एव । बालानामिति प्रायोभावित्वादुक्तं, तेनाबालानामपि दृश्यमानाः संगच्छन्ते ॥ १ ॥

यवाकारा सुकठिना ग्रथिता मांससंश्रिता ।
पिडका कफवाताभ्यां यवप्रख्येति सोच्यते ॥ २ ॥

यवप्रख्यामाह—यवाकारेत्यादि । यवाकारेति यववन्मध्ये स्थूला ॥ २ ॥

*घनामवक्त्रां पिडकामुन्नतां परिमण्डलाम् ।
अन्धालजीमल्पपूयां तां विद्यात्कफवातजाम् ॥ ३ ॥

अन्धालजीमाह—घनामित्यादि । अन्धालजी स्नायुगता भोजवचनादवगन्तव्या । यदुक्तं,—"श्लेष्मानिलौ स्थितौ स्नायुं पिडकां परिमण्डलाम् । कुर्यो जनयतोऽवक्त्रामल्पपूयामकण्डुराम् ॥ आमोदुम्बरसंकाशां विद्यादन्धालजीं तु ताम्"—इति ॥ ३ ॥

विवृतास्यां महादाहां पक्वोदुम्बरसंनिभाम् ।
विवृतामिति तां विद्यात्पित्तोत्थां परिमण्डलाम् ॥ ४ ॥

विवृतामाह–विवृतास्यामित्यादि । पित्तनाधिकपाकादिहतमुखतायां विवृतासंज्ञा॥४॥

†ग्रथिताः पञ्च वा षड्वा दारुणाः कच्छपोन्नताः ।
कफानिलाभ्यां पिडका ज्ञेयाः कच्छपिका बुधैः ॥ ५ ॥

कच्छपिकालक्षणमाह—ग्रथिता इत्यादि । दारुणाः कठिनाः । मध्योन्नतत्वेन पर्यन्तानतत्वेन च कच्छपिकासंज्ञा ॥ ५ ॥

‡ग्रीवांसकक्षाकरपाददेशे सन्धौ गले वा त्रिभिरेव दोषैः ।
ग्रन्थिः स वल्मीकवदक्रियाणां जातः क्रमेणैव गतः प्रवृद्धिम् ॥६॥
मुखैरनेकैः स्रुतितोदवद्भिर्विसर्पवत्सर्पति चोन्नताग्रैः ।
वल्मीकमाहुर्भिषजो विकारं निष्प्रत्यनीकं चिरजं विशेषात् ॥ ७ ॥

वल्मीकलक्षणमाह—ग्रीवांसेत्यादि । वल्मीकवदित्यनेन बहुरन्ध्रितरत्वेन समुच्छ्रितत्वं दूरावगाढमूलत्वं च दर्शयते । अत एव चिकित्सायामवगाढमूलशोधनार्थमग्निशराभ्यां चिकित्सेदित्युक्तम् ॥ ६–७ ॥

§पद्मकर्णिकवन्मध्ये पिडकाभिः समाचिताम् ।
इन्द्रविद्धां तु तां विद्याद्वातपित्तोत्थितां भिषक् ॥ ८ ॥

इन्द्रविद्धामाह—पद्मकर्णिकवदित्यादि । पद्मकर्णिकवन्मध्ये इति पद्मबीजवत् ॥८॥

---

* 'अन्धालजी बहिर्वक्त्रहीना, अन्तर्मुखी, स्नायुश्रिता च' ॥ ३ ॥

† 'मध्ये उन्नतत्वेन पर्यन्ते नतत्वेन च कच्छपिकासंज्ञा' ( आ० द० ) ॥ ५ ॥

‡ 'निष्प्रत्यनीकमसाध्यम्' ( आ० द० ) ॥ ६ ॥ ७ ॥

§ 'पद्मकर्णिकामध्ये बीजवत्पिडकाभिर्युक्ताम्' ( आ० द० ) ॥ ८ ॥

*मण्डलं वृत्तमुत्सन्नं सरक्तं पिडकाचितम् ।
रुजाकरीं गर्दभिकां तां विद्याद्वातपित्तजाम् ॥ ९ ॥

गर्दभिकामाह—मण्डलमित्यादि । गर्दभिका यद्यपि समानतन्त्रे न पठ्यते तथाऽपि सर्वत्र सुश्रुतेऽभिधीयते; अभिनीतपाठेन व्यवस्थितैव ॥ ९ ॥

वातश्लेष्मसमुद्भूतः श्वयथुर्हनुसन्धिजः ।
स्थिरो मन्दरुजः स्निग्धो ज्ञेयः पाषाणगर्दभः ॥ १० ॥

पाषाणगर्दभलक्षणमाह—वातेत्यादि । स्थिरः कठिनः, पाषाणवत् काठिन्यात् पाषाणगर्दभः लोके 'गलवट' इति ख्यातः ॥ १० ॥

कर्णस्याभ्यन्तरे जातां पिडकामुग्रवेदनाम् ।
स्थिरां पनसिकां तां तु विद्याद्वातकफोत्थिताम् ॥ ११ ॥

पनसिकामाह—कर्णस्येत्यादि । एषा भोजे 'समन्ततः' इति वचनात् कर्णस्य बहिरपि भवतीति केचिद्व्याचक्षते । यदुक्तं,—"कफवातौ प्रकुपितौ मांसमाश्रित्य कर्णयोः । समन्ततः परिसर्पां कुरुतः पिडकां स्थिराम् ॥ विषमां दाहसंयुक्तां विद्यात् पनसिकां तु ताम्"—इति । तत्तु न सम्यक्, समन्तत इत्यस्य कर्णाभ्यन्तर एवोपपन्नत्वात् । इयमेव पामरजने पाद्धकाकारेयमिति केचित् । अस्यां वातकफजायां भोजे दाहपाठो विकृतिविषमसमवायादधिष्ठानभूतरक्तप्रभावाद्वाऽवगन्तव्यः ॥ ११ ॥

विसर्पवत्सर्पति यः शोथस्तनुरपाकवान् ।
दाहज्वरकरः पित्तात्स ज्ञेयो जालगर्दभः ॥ १२ ॥

जालगर्दभलक्षणमाह—विसर्पवदित्यादि । अपाकवानिति ईषत्पाकवान्, पित्तहरत्वेन सर्वथा पाकाभावस्यायुक्तत्वादिति चक्रः, किन्तु पाकरहित एवायमुपलभ्यते । पित्तादित्युक्तत्वात्, तेन भोजोक्तं पित्तोत्कटदोषत्रयजन्यत्वमस्याविरुद्धं भवति । स यथाह,—"पित्तोत्कटास्त्रयो दोषा जनयन्ति त्वगाश्रिताः । श्वयथुं रक्तं तनुं शोफमपाकं बहुवेदनम् ॥ विसर्पिणं सदाहं च तृष्णाज्वरसमन्वितम् । विसर्पमाहुस्तं व्याधिमपरे जालगर्दभम्"—इति । जतूकर्णोऽप्याह—"पित्ताभिष्यन्दः शीतदाहो रक्ताभो विसर्पज्वरकरो जालगर्दभः—" इति । अपकशिवात इति रूपालो विकारः ॥ १२ ॥

[1]पिडकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वराम् ।
सर्वात्मिकां सर्वलिङ्गां जानीयादिरिवेल्लिकाम् ॥ १३ ॥
बाहुपार्श्वांसकक्षेषु कृष्णस्फोटां सवेदनाम् ।
पित्तप्रकोपसंभूतां कक्षामित्यभिनिर्दिशेत् ॥ १४ ॥

इरिवेल्लिकालक्षणमाह—पिडकामित्यादि । सर्वात्मिकां सर्वलिङ्गामिति । सर्वात्मिकां सर्वदोषजाम् । सर्वात्मिकाभिधानेनैव सर्वलिङ्गत्वे सिद्धे पुनः सर्वलिङ्गामिति वचनं वि-कृतिविषमसमवायारब्धत्वव्यतिरेकेण प्रत्येकदोषलिङ्गयुक्तत्वं दर्शयति ॥१३॥१४॥

* 'इत्थं गर्दभम् । उभयमुक्तम्' (का० ८०) ॥ ९ ॥
† 'उपनाहस्था शिरोगतम्' (का० ८०) ॥ १३ ॥ १४ ॥

१ "मद्ध.सराविनीम्" इति पाठान्तरम् ।

एकामेतादृशीं दृष्ट्वा पिडकां स्फोटसंनिभाम् ।
त्वग्गतां पित्तकोपेन गन्धमालां प्रचक्षते ॥ १५ ॥

गन्धमालामाह—एकामित्यादि । एकामेतादृशीमिति कक्षोत्थकृष्णस्फोटसदृशीम् ॥ १५ ॥

*कक्षभागेषु ये स्फोटा जायन्ते मांसदारणाः ।
अन्तर्दाहज्वरकरा दीप्तपावकसंनिभाः ॥ १६ ॥
सप्ताहाद्वा दशाहाद्वा पक्षाद्वा हन्ति मानवम् ।
तामग्निरोहिणीं विद्यादसाध्यां सर्वदोषजाम् ॥ १७ ॥

अग्निरोहिणीलक्षणमाह—कक्षेत्यादि । सप्ताहाद्वा दशाहाद्वेत्यभिधानमसाध्यत्वमप्यनुपक्रमाद्बोद्धव्यम् । उपक्रमात् पुनरियं साध्यैव, अत एवास्याश्चिकित्साभिधानं चरकेणाप्यग्निरोहिणीं प्रत्यभिहितं,—"सन्ति ह्येवंविधा रोगाः साध्या दारुणसंमताः । ये हन्युरनुपक्रान्ता मिथ्यारम्भेण वा पुनः" (च. सू. स्था. अ. १८)—इति । तन्त्रान्तरमपि,—"पित्तप्रकोपोत्कटा दोषाः प्रदीप्ताङ्गारसंनिभान् । कक्षभागेषु कुर्वन्ति तीव्रदाहरुजाज्वरान् ॥ मांसावदारणान् स्फोटान् ये हन्युरनुपक्रमात् । पक्षाद्दशाहादर्वाग्वा सा ज्ञेया वह्निरोहिणी"—इति । वातपित्तकफाधिक्याद्यथाक्रमं सप्ताहादिविकल्पः ॥ १६ ॥ १७ ॥

†नखमांसमधिष्ठाय वायुः पित्तं च देहिनाम् ।
कुर्वाते दाहपाकौ च तं व्याधिं चिप्पमादिशेत् ॥ १८ ॥
तदेवाल्पतरैर्दोषैः परुषं कुनखं वदेत् ॥ १९ ॥

चिप्पमाह—नखेत्यादि । तं व्याधिं चिप्पमिति चिप्पमङ्गुलिवेष्टकमिति ख्यातम् । चरके त्वक्षतनामायं विकारः । यदुक्तं,—"रोगोऽक्षतश्चर्मनखान्तरे स्यान्मांसाश्रयदोषो भृशदाहपाकः" (च. चि. स्था. अ. १२)—इति ॥ १८ ॥ १९ ॥

‡गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थिताम् ।
पादस्यानुशयीं तां तु विद्यादन्तःप्रपाकिनीम् ॥ २० ॥

अनुशयीलक्षणमाह—गम्भीरामित्यादि । गम्भीरामित्यन्तःपाकेन । अल्पसंरम्भामित्यल्पशोथाम् ॥ २० ॥

---

* 'वाताधिकैः सप्ताहात्, पित्ताधिकैर्दशाहात्, कफाधिकैः पक्षादित्यूचुः' (आ० द०) ॥ १६ ॥ १७ ॥

† 'अन्ये तु "तमेवाक्षतरोगाख्यं तथोपनखमित्यपि" इत्यधिकं ग्रन्थमपीपठन् । तदेव चिप्पमिति' (आ० द०) ॥ १८ ॥ १९ ॥

‡ "कफपित्तप्रकोपोत्थां विद्यादनुशयीं भिषक्" इति केचन पाठं पठन्ति । उपरिस्थिता महती सिताभिर्व्याप्तपृष्ठे' (आ० द०) ॥ २० ॥

विदारीकन्दवद्वृत्ता कक्षावङ्क्षणसन्धिषु।
विदारिका भवेद्रक्ता सर्वजा सर्वलक्षणा ॥ २१ ॥

विदारीलक्षणमाह—विदारीत्यादि। विदारिका भवेद्रक्ता सर्वजा सर्वलक्षणेत्यत्र केचिदसर्वजा, असर्वलक्षणेति उभयत्रापि नञः प्रयोगमिच्छन्ति, तेनासर्वजा इति सर्वदोषैः सन्निपतितैर्न भवति, असर्वलक्षणेति सन्निपातलक्षणरहितेत्यर्थः। तेन प्रत्येकदोषद्वन्द्वजत्वेन षड्विधा सन्निपातमात्रेण न भवतीति वाक्यार्थः। किंत्वयं पक्षो यदभिमतः स्यादाचार्यस्य, तदा व्यक्तयर्थं 'षड्विधा त्वेकदोषजा' इति पदं कृतं स्यात्। किंच बहुप्रपञ्चत्वेन क्षुद्रत्वासङ्गतिश्च। अपरे 'असर्वजा सर्वलक्षणा' इति पठन्ति; तदपि न संगतं, सर्वदोषैर्न भवत्यथ सर्वदोषलक्षणा भवति हन्त तर्हि लिङ्गिनमन्तरेण लिङ्गप्रादुर्भावप्रसङ्गः। अन्ये तूत्तरपद एव नञः प्रयोगात् 'सर्वजाऽसर्वलक्षणा' इति वदन्ति। तत्र यदि सर्वेषां लक्षणानि सर्वलक्षणानि तान्यविद्यमानानि यस्यामिति, तदा कथं लिङ्गमन्तरेण लिङ्गिनः परोक्षस्य परिच्छेदोदयः। अथ सर्वाणि च तानि लक्षणान्यविद्यमानानि यस्यामिति, सन्निपातजत्वेऽप्यसंपूर्णलक्षणेत्यर्थः। एतदपि न सङ्गतं, यद्ययं पक्षोऽभीष्टः स्यात्तदाऽसर्वलक्षणेति न वक्तव्यमत्र स्यात्, सर्वत्र न्यायस्यास्य समानत्वात्; हेत्वनुरूपकोपबलेन हि सर्वत्र सर्वार्थास्वलिङ्गप्रवृत्तिः। असंपूर्णलक्षणत्वेन दोषाणां हीनबलत्वं समवेतानामनारम्भकत्वं वा शक्यमेवास्मिन् पक्षे वक्तुं, किंतु तथात्रियन्ते; ततश्चोभयत्रापि नञः प्रयोगं विना सर्वजा सर्वलक्षणेति पाठो युक्तः सर्वजेत्यभिधायापि सर्वलक्षणेति वचनमिहेवेत्थिकायामिव प्रकृतिसमसमवायजन्यत्वातादिलक्षणदर्शनार्थं, तेन विकृतिविषमसमवायजन्यास्वाधत्वादिलक्षणानि न भवन्ति। अस्मिन्नपि पाठे सर्वजा सर्वैरेकादिप्रकोपैस्तैस्तादिभिर्जन्यते, एवं सर्वलक्षणेति वक्तुं पार्यते, किंतु क्षुद्ररोगत्वाद्दोषभेदेन गणना न युक्ता। चरके त्वियं कफमारुतजा पठ्यते। यदुक्तं,—"ज्वरान्विता वङ्क्षणकक्षसन्धौ वर्तिर्निरर्तिः कठिना मता या। विदारिका सा कफमारुताभ्याम्" ( च. चि. स्था. अ. १ )—इति। तेनात्राप्यत्रपित्तानुबन्धकफवातजत्वेन सर्वजत्वं ज्ञेयम्। यथा—ज्वरयोगेनाप्यपित्तत्वम्। यदुक्तम्,—"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना" ( च. चि. स्था. अ. १ )—इति। 'विदारीमिति तां विद्यात् सर्वजां सर्वलक्षणाम्' इति पाठान्तरे न कश्चिद्व्याख्यानप्रयत्नः ॥ २१ ॥

*प्राप्य मांससिरास्नायुः श्लेष्मा मेदस्तथाऽनिलः।
ग्रन्थिं करोत्यसौ भिन्नो मधुसर्पिर्वसानिभम् ॥ २२ ॥
स्रवत्यास्रावमनिलस्तत्र वृद्धिं गतः पुनः।
मांसं संशोष्य ग्रथितां शर्करां जनयेत्ततः ॥ २३ ॥
दुर्गन्धि क्लिन्नमत्यर्थं नानावर्णं ततः सिराः।
स्रवन्ति रक्तं सहसा तं विद्याच्छर्करार्बुदम् ॥ २४ ॥

* 'शर्करा पाषाणशर्करा। तत्र इति शर्कराशब्दे, अत्र तद्वत्त्वे प्रयोगः' ( भा० ८० ) ॥ २२ ॥ २३ ॥ २४ ॥

१ 'मस्तके त्वथ दोषे विदके मेदसा कर्णमूलं त्वगुणाः'—इत्यादि पाठान्तरं पठ्यते।

शर्करामाह—प्राप्येत्यादि । इयमेव शर्करार्बुदस्य हेतुः । अस्याः कफानिलौ दोषौ, मांससिरास्नायुमेदांसि दूष्याणि । अनिलश्च वृद्धिं गत इति पूर्वमेव तावद्दुष्टोऽनिलो धातुक्षयेण वृद्धिमतिशयेन गतो मांसं विशोष्य काठिन्यात् शर्करातुल्या शर्करा जनयति । अतः शर्करायास्तुल्यं शर्करार्बुदं भवति । दुर्गन्धि क्लिन्नमित्यादिना शर्करोत्पन्नं शर्करार्बुदलक्षणं, शर्करार्बुदं च शर्करावस्थैवेत्येक एवायं विकारः, तेन न संख्यातिरेकः । नानावर्णमिति घृतमेदोवसावर्णं रक्तम् । तत इति शर्करार्बुदादेव । भोजेऽपि पठ्यते,—"तमेव भिषग् दुर्गन्धं घृतमेदोनिभं सिराः । स्रवन्ति स्रावमनिशं तदा स्याच्छर्करार्बुदम्"—इति । तमेवेति ग्रन्थिम् ॥ २३—२४ ॥

परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः ।
पादयोः कुरुते दारीं पाददारीं तमादिशेत् ॥ २५ ॥

पाददारीमाह—परिक्रमणशीलस्येत्यादि । परिक्रमणं पादविहरणं, दारी दारणमात्रं, विपादिकायां तु पिडका सविदारणेति भेदः ॥ २५ ॥

*शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः ।
ग्रन्थिः कोलवदुत्सन्नो जायते कदरं हि तत् ॥ २६ ॥

कदरमाह—शर्करोन्मथित इत्यादि । कदरं घोलाठीति ख्यातम् । कोलवदित्यस्य स्थाने कीलवदिति पाठान्तरम् । कदरं हस्तेऽपि भवति । तथाच भोजः,—"हस्तयोः पादयोश्चापि गम्भीरानुगतं खरम् । मांसकीलं जनयतः कुपितौ कफमारुतौ ॥ सशल्यमिव तं देशं मन्यते तेन पीडितः । शर्कराकदरं केचिन्मन्यन्ते वातकण्टकम्"—इति । कोलवदिति बदरवत् ॥ २६ ॥

क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुजान्वितौ ।
दुष्टकर्दमसंस्पर्शादलसं तं विभावयेत् ॥ २७ ॥

अलसकलक्षणमाह—क्लिन्नेत्यादि । अयं कफरक्तजो विकारः 'पाकुया' इति ख्यातः । अत्र कण्डूः कफस्य, दाहरुजे रक्तस्य ॥ २७ ॥

†रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् ।
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ॥ २८ ॥
रुणद्धि रोमकूपांस्तु ततोऽन्येषामसंभवः ।
तदिन्द्रलुप्तं खालित्यं रुह्येति च विभाव्यते ॥ २९ ॥

इन्द्रलुप्तस्य लक्षणमाह—रोमकूपेत्यादि । एतत्त्रिभिर्दोषैः सशोणितैः स्वभावाभिघात-कालव्यापारैर्भवति । एतच्च स्त्रीणां न भवतीति विदेहवचनाद्व्याख्यातारो वर्णयन्ति । यदुक्तं,—"अत्यन्तसुकुमारास्तासां दोषा दुष्टाः स्रवन्ति च । अव्यायामरता यस्मात्तस्मात्तासां न विद्यते"

* 'पादे शर्करा परमपरामर्दादयः, नाभिरुन्मथिते पीडिते कण्टकादिभिर्वा क्षते कोलवदुत्सन्नो ग्रन्थिर्जायते, तत्कदरं नाम' ( का० ह० ) ॥ २६ ॥

† 'मूर्च्छितं वृद्धिगतं, प्रच्यावयति पातयति । ततोऽन्येषामसंभव इति अन्येषां रोम्णामनुद्भवः' ( का० ह० ) ॥ २८ ॥ २९ ॥

धिया –" इति । अव्यायामाद्वातपित्तयोरकोपेन नातिरोमच्युतेः, रजस्रावेण च स्रोतोऽनवरोधाभावाच्च्युतानामपि रोम्णां पुनर्विरोहः, किंतु क्वाप्यपि खल्तिदर्शनात् प्रायिकं विदेहवचनम् । खालित्यं रुज्येति च तस्य पर्यायकथनम् । तथाच भोजः,– "तदिन्द्रलुप्तमित्याहुः खली रुज्या च केचन"–इति । कार्तिकस्त्वाह,–"इन्द्रलुप्तं श्मश्रुणि भवति, खालित्यं शिरस्येव, रुज्या च सर्वदेहे"–इति । आगमस्त्वत्र नास्ति ॥२८॥२९॥

*दारुणा कण्डुरा रूक्षा केशभूमिः प्रपाट्यते ।
कफमारुतकोपेन विद्याद्दारुणकं तु तम् ॥ ३० ॥

दारुणलक्षणमाह—दारुणेत्यादि । दारुणेति कठिना । कफमारुतकोपादिति यद्यप्युक्तं तथापि पित्तरक्तानुबन्धोऽप्यत्र द्रष्टव्यः । तथाहि विदेहः,–"यदत्र पटलामासं सरुजस्कं शिरस्त्वचि । परुषं जायते जन्तोस्तस्य रूपं विशेषतः ॥ तोदं समन्वितं वातात् सकण्डूगौरवं कफात् । सपिपासं सदाहार्तिरागं पित्तास्रजं तथा"–इति । अत्र वचने सदाहरागं च पित्तात्, आर्तिं तु रक्तात्, आर्तिर्हि रक्तजाऽपि भवति । यदुक्तं,—"रक्तं हि व्यम्लतां याति तच्चनास्ति न चास्ति रुक्"—इति । दारुणं रुसीति लोके ॥३०॥

†अरूंषि बहुवक्त्राणि बहुक्लेदीनि मूर्ध्नि तु ।
कफासृक्कृमिकोपेन नृणां विद्यादरूंषिकाम् ॥ ३१ ॥

अरूंषिकामाह—अरूंषीत्यादिना । अरूंषीति व्रणाः ॥ ३१ ॥

‡क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः ।
पित्तं च केशान् पचति पलितं तेन जायते ॥ ३२ ॥

पलितमाह—क्रोधेत्यादि । शरीरोष्मेति देहाग्निः । पित्तं चेति पित्तमपि शिरोगतं पलितहेतुः । ननु, पित्तमेवाग्निः, तत्र तत्र पित्तस्य पाचकत्वेनाभिधानात्, यदुक्तवान् सुश्रुतः,–"न पाक पित्ताद्वे" ( सु. सू. स्था. अ. १७ )—इति, तथा–"पित्ते तस्मिन् पाचकोऽग्निरिति संज्ञा" ( सु. सू. स्था. अ. २१ )–इति, तथा स एव–"न खलु पित्तव्यतिरेकेणान्योऽग्निरुपलभ्यते, आग्नेयत्वात् पित्ते दहनपचनादिष्वभिप्रवर्तमानेऽग्निवदुपचारः क्रियतेऽन्तरग्निरिति, क्षीणे ह्यग्निगुणे तत्समानद्रव्योपयोगादतिवृद्धे शीतक्रियोपयोगादागमाच्च पश्यामो न खलु पित्तव्यतिरेकेणान्योऽग्निः" (सु. सू. स्था. अ. २१)–इति, चरकाचार्योऽप्याह,–"दर्शनं पक्तिरूष्मा च क्षुत्तृष्णा देहमार्दवम् । प्रभा प्रसादो मेधा च पित्तकर्माविकारजम्" ( च. सू. स्था. अ. १८ )–इति, पाकव्यापारमनुसरता चाग्निरङ्गीकारः, किं च यदेऽग्निः पित्तकरशरीरादिद्रव्योपयोगात्संवृद्धिः,

पित्तप्रतिकूलशीतमधुरादिद्रव्योपयोगाच्चोपशम उपलभ्यते, यदि हि पित्ताद्भिन्नोऽग्निः स्यात्तदा पित्तस्य वृद्धिह्रासानुविधानमस्यानुपपन्नं स्यात्, न हि तुहिनकरमण्डले हिमभाज्यऽहिमोपलम्भः, अनुहिनमण्डले अहिममाजि भावति भास्करेऽभिमतो हिमोपलम्भः, यद्यतो भिन्नं तत्ततो भेदेनोपलभ्यते, यथा सागराज्जगर, न चैवं पित्तादग्निः, तदुत पित्तादग्नेः पृथगुपादानमिति ? अत्र प्रत्यभिधीयते—न तावदन्तरग्निः पित्ताद्भिन्नः, भेदसाधकप्रमाणस्य भूयः सद्भावात्, तथाप्यभेदे 'समदोषः समाग्निश्च' (सु. सू. स्था. अ. १५) इत्यत्र, "समप्रकोपौ दोषाणां सर्वेषामग्निसंश्रयौ" इत्यत्र च दोषपदलब्धत्वादग्नेः पृथगुपादानमसङ्गतं, तीक्ष्णः पित्तेन चेति स्वात्मनि क्रियाविरोधादसङ्गतं, यत्पुनः "न खलु पित्तव्यतिरेकेणान्योऽग्निः" इत्याद्युक्तं तद्भेदमेव साधयति, उपचाराभिधानात्, न ह्यभेदे उपचारः सम्भवति । यदप्यग्नेः पित्तवृद्धिह्रासानुविधानमभिहितं तदप्रयोजकं, भेदेऽपि समानत्वेन तदुपपत्तेः । यथा कफवृद्धिह्रासकरसौम्याग्नेयद्रव्याभ्यां शुक्रस्य वृद्धिह्रासौ दृष्टौ, न च कफशुक्रयोरैक्यं, किंच घृतं पित्तशमनमग्नेश्च दीपनं, पित्तस्य सर्षपादौ नाग्नेर्वृद्धिः, पेयादिकं चाग्निकरं, न पित्तकरं । ततश्च पित्ताद्विलक्षणोऽन्तरग्निः । स च द्रवतेजःसमुदायात्मकस्य पित्तस्य तेजोभागो न बहिरन्यद्रूपसाधारणाकार, समुदायतश्च समुदायी अन्य एव करचरणादिभ्य इव शरीरं, अत्यन्तभेदेन चाग्रहणं, तस्य नित्यसंश्लेषणशालित्वात् । पित्तस्य तेजोंऽश एव पाच(क)कः, तदाह भोजः,—"हृदमुष्णोषितं हेनव पित्तोष्मा पचतीति च । मूर्च्छितो रसवीर्याभ्यां समानव्यानसहितः"—इत्यारभ्य, "तस्मात् तेजोमयं पित्तं पित्तोष्मा यः स पक्तिमान् । स कायाग्निः स कायोष्मा स पक्ता स च जीवनः"—इति । पित्तैकदेशत्वात्तेजसि पित्तोपचारमाश्रित्य सुश्रुतेनोक्तं,—"न पाकः पित्तादृते"—इति, तथा—"न खलु पित्तव्यतिरेकेणान्योऽग्निः"—इति । एवमन्यदप्यनेकभेदसाधकं वचनं समाधेयम् । ननु, यदि तीक्ष्णः पित्तेनेत्युक्तं, तत् कथं पित्तेनैवाग्नेः प्रशमनमभिधीयते । यदुक्तं चरके,—"घृतजीर्णविदाहमम्लक्षारादैः पित्तमुद्रिक्तम् । आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम्" (च. चि. स्था. अ. १५)—इति । उच्यते, यदा घृतेन दृढोष्णेन पित्तं वृद्धं भवति, तदा तेजोभागरूपाया पित्तस्यावस्थाया उल्बणत्वात्तीक्ष्णः पित्तेनेति सङ्गतं, यदाऽल्पगुणेन स्निग्धोष्णेन कफानुगमनभाजा वृद्धं पित्तं तदा पित्तस्य द्रवावस्थाया उद्रिक्तत्वादग्निर्वापणमुदकमिति । अतएवोक्तं—"कुपितेन वायुना दीपस्येवाग्निर्निर्वापणं, पित्तेनोष्णमम्बरं, कफेनाम्बुवत्"—इति । ततश्च युक्तमग्नेः पृथगुपादानमिति । अग्निश्च पित्तगतत्वेन शोथहेतुर्भवत्येव, शोथेन पित्तदोषात्, शोथश्च माभ्यां तु अनिलवातेन शरीरोष्मणोऽपि विक्षेपणाच्छिरोगतत्वं, तेनानिलोऽपि लभ्यते, पित्तं च साक्षादुपात्तं, चकारेण श्लेष्माऽपि केशानुकर्ताकारो लभ्यते । एतेन दोषत्रयसहितशरीरोष्मा पलितहेतुरिति वाक्यार्थश्चरकोक्तार्थेन सह संवादी भवति । यदाह,—'तेजोऽनिलाद्यैः सह केशभूमिं दग्ध्वा तु कुर्यात् खलतिं नरस्य । किंचित्तु दग्ध्वा पलितानि कुर्याद्धरिप्रभत्वं च शिरोरुहाणाम्" (च. चि. स्था. अ. २)—इति । एतच्चाकालजपलितव्याधिलक्षणम् । कालजे तु प्रोक्तमिदं कारणान्तरोपलक्षणं,

स्त्रियाः-" इति । अव्यायामाद्वातपित्तयोरकोपेन नातिरोमच्युतिः, रजःस्रावेण च स्रोतोऽवरोधाभावाच्च्युतानामपि रोम्णां पुनर्विरोहः; किंतु स्त्रीष्वपि खलितिदर्शनात् प्रायिकं विदेहवचनम् । खालित्यं रूयेति च तस्य पर्यायकथनम् । तथाच भोजः,- "तदिन्द्रलुप्तमित्याहुः खलीं रुह्यां च केचन"-इति । कार्तिकस्त्वाह,-"इन्द्रलुप्तं श्मश्रुणि भवति, खालित्यं शिरस्येव, रुह्या च सर्वदेहे"-इति । आगमस्त्वत्र नास्ति ॥२८॥२९॥

*दारुणा कण्डुरा रूक्षा केशभूमिः प्रपाट्यते ।
कफमारुतकोपेन विद्याद्दारुणकं तु तम् ॥ ३० ॥

दारुणलक्षणमाह—दारुणेत्यादि । दारुणेति कठिना । कफमारुतकोपादिति यद्यप्युक्तं तथापि पित्तरक्तानुबन्धोऽप्यत्र द्रष्टव्यः । तथाहि विदेहः,-"यदत्र पटलाभासं सरुजस्कं शिरस्त्वचि । परुषं जायते जन्तोस्तस्य रूपं विशेषतः ॥ तोदैः समन्वितं वातात् सकण्डूगौरवं कफात् । सपिपासं सदाहार्तिरागं पित्तासजं तथा"-इति । अत्र वचने सदाहरागं च पित्तात्, सार्तिं तु रक्तात्, आर्तिर्हि रक्तजाऽपि भवति । यदुक्तं,—"रक्तं हि व्यम्लतां याति तच्चनास्ति न चास्ति रुक्"—इति । दारुणं रूखीति लोके ॥३०॥

†अरूंषि बहुवक्त्राणि बहुक्लेदीनि मूर्ध्नि तु ।
कफासृक्कृमिकोपेन नृणां विद्यादरूंषिकाम् ॥ ३१ ॥

अरूंषिकामाह—अरूंषीत्यादिना । अरूंषीति व्रणाः ॥ ३१ ॥

‡क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः ।
पित्तं च केशान् पचति पलितं तेन जायते ॥ ३२ ॥

पलितमाह—क्रोधेत्यादि । शरीरोष्मेति देहाग्निः । पित्तं चेति पित्तमपि शिरोगतं पलितहेतुः । ननु, पित्तमेवाग्निः, तत्र तत्र पित्तस्य पाचकत्वेनाभिधानात्; यदुक्तवान् सुश्रुतः,-"न पाकः पित्तादृते" ( सु. सू. स्था. अ. १७ )—इति, तथा-"पित्ते तस्मिन् पाचकोऽग्निरिति संज्ञा" ( सु. सू. स्था. अ. २१ )-इति, तथा [illegible] एव-"न खलु पित्तव्यतिरेकेणान्योऽग्निरुपलभ्यते, आग्नेये तु पित्ते दहनपचनदारणादिष्वभिवर्तमानेऽग्निवदुपचारः क्रियते अन्तरग्निरिति, क्षीणे ह्यग्निगुणे तत्समानद्रव्योपयोगादतिवृद्धे शीतक्रियोपयोगादागमाच्च पश्यामः न खलु पित्तव्यतिरेकेणान्योऽग्निः" (सु. सू. स्था. अ. २१)-इति; चरकाचार्योऽप्याह,-"दर्शनं पक्तिरूष्मा च क्षुत्तृष्णा देहमार्दवम् । प्रभाप्रसादौ मेधा च पित्तकर्माविकारजम्" ( च. सू. स्था. अ. १८ )-इति; पाकस्यान्यथानुपपत्त्या चाग्नेरङ्गीकारः; किंच मन्देऽग्नौ पित्तकरमरीचादिद्रव्योपयोगादग्नेर्वृद्धिः,

* 'प्रपाट्यते स्फुटयते' ( आ० द० ) ॥ ३० ॥

† 'नृणां पुरुषाणां कफासृक्कृमिकोपेन मूर्धनि मस्तके बहुवक्त्राणि तथा बहुक्लेदानि, अरूंषीति व्रणा भवन्ति, तामरूंषिकां विद्यात्' ( आ० द० ) ॥ ३१ ॥

‡ 'क्रोधादिकृतेन शरीरोष्मणा पित्तेन शिरोगतेन केशान् पच.कृतं तु प्रसिद्धमित्यर्थः। अन्ये तु पित्ताद्दोषभेदवादिन उभाभ्यां मन्यन्ते वातजलक्षणं, अन्येऽपि त्रिभिरेव दोषैः स्यादिति कथयन्ति' ( आ० द० ) ॥ ३२ ॥

तेन वयःपरिणामकृतश्चोष्मा दोषत्रययुक्तः कालजपलितहेतुः । अन्यथा कालजपलितस्य सङ्ग्रहो न स्यात् । किंवा कालजं स्वाभाविकत्वादेव नोच्यते । अन्ये तु पित्तगतश्चेच्छरीरोष्मा तत् किमुभयोरुपादानेनेत्यभिधाय शरीरोष्मा पित्तं चेति कर्तृद्वयमाचक्षते, तेन नात्रैकस्मिन् विषये समुच्चयः, किं तर्हि विषयभेदात् । कर्तृद्वयं-तत्र शरीरोष्मा वैकृतं पलितं करोति, पित्तं च प्राकृतं पित्तप्रकृतेः पलितं करोति । यदुक्तं,-"पित्तप्रकृतिरकालजरन्भीपलितयुक्तश्च भवति"-इति । एवं स्वाभाविकजरापलितमपि पित्तेनैवास्य हेतोः सूक्ष्मत्वात् । न चोष्मकृतत्वेन पलितस्यादोषजत्वप्रसङ्गः, ऊष्मणः पित्तधर्मत्वेन पित्तेऽन्तर्भावात् ॥ ३२ ॥

*शाल्मलीकण्टकप्रख्याः कफमारुतरक्तजाः ।
युवानपिडका यूनां विज्ञेया मुखदूषिकाः ॥ ३३ ॥

युवानपिडकालक्षणमाह—शाल्मलीत्यादि । युवानपिडका लोके 'बरण्डका' उच्यते, यूनामाननपिडका युवानपिडका, पृषोदरादित्वादकारलोपः ; एषा च यूनामेव, मुखे एव, स्वभावात् ॥ ३३ ॥

†कण्टकैराचितं वृत्तं मण्डलं पाण्डुकण्डुरम् ।
पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम् ॥ ३४ ॥

पद्मिनीकण्टकमाह—कण्टकैरित्यादि । तदाख्यमिति पद्मिनीकण्टकाख्यम् ॥ ३४ ॥

सममुत्सन्नमरुजं मण्डलं कफरक्तजम् ।
सहजं लक्ष्म चैकेषां लक्ष्यो जतुमणिस्तु सः ॥ ३५ ॥

जतुमणिमाह—सममित्यादि । समं मसृणम् । उत्सन्नमुन्नतम् । अयं 'जडुल' इति लोके प्रसिद्धः । कफरक्तजमिति प्राधान्येनोक्तं, तेन चरकोक्तं त्रिदोषजत्वमप्यस्योपपन्नं भवति । यदुक्तं तेन,-"कृष्णः स्निग्धो जतुमणिर्ज्ञेयो वातोत्तरैस्त्रिभिः । अरुजं सपरुषं लक्ष्मेत्याहुर्भिरग्वरा"-इति । सहजं लक्ष्म चैकेषामिति एकेषामाचार्याणां मतेन सहजं लक्ष्म लक्षणं स्त्रीपुंसयोरङ्गभेदेन शुभाशुभफलप्रदं भवति । सहजं शरीरेण सह जातं जन्मकालप्रवृत्तमित्यर्थः ॥ ३५ ॥

अवेदनं स्थिरं चैव यस्मिन् गात्रे प्रदृश्यते ।
माषवत्कृष्णमुत्सन्नमनिलान्मषकं तु तत् ॥ ३६ ॥

मषकलिङ्गमाह—अवेदनमित्यादि । स्थिरं कठिनमिति गयदासः, अचलमिति युक्तं, भोजे स्थिरमिति पाठात् । मषकमादिश्चेदिति माषशब्दात् "इवे प्रतिकृतौ" इति कन्, नैरुक्तयेन च विधिना ह्रस्वत्वम् । अत्र चकारेण कफमेदसी समुच्चीयेते । तथाच भोजः,-"वातेरिते त्वचि यदा दूष्येते कफमेदसी । कृष्णं मृदु सवर्णं च तु उन्नतं मषकं वदेत्"-इति ॥ ३६ ॥

---

* 'मुखदूषिका मुखकान्तिहारका.' (आ० द० ) ॥ ३३ ॥

† 'पद्मिनीकण्टकसदृशैः कण्टकैराचितं वृत्तादिलक्षणं यन्मण्डलं भवति' ( आ० ) ॥ ३४ ॥

*कृष्णानि तिलमात्राणि नीरुजानि समानि च।
वातपित्तकफोच्छोषात्तान्विद्यात्तिलकालकान् ॥ ३७ ॥

तिलकालकलक्षणमाह—कृष्णानीत्यादि। "वातपित्तकफोच्छोषात्" इति पाठे वातपित्ताभ्यां हेतुभ्यां कफस्योच्छोषः शोषणं तस्मात्। अन्ये चरकं दृष्ट्वा 'वातपित्तासृगुच्छोषात्' इति पठन्ति। तथाच चरकः—"यस्य पित्तं प्रकुपितं शोणितं प्राप्य शुष्यति। तिलका पिप्लवो व्यङ्गा नीलिका चास्य जायते" (च. सू. स्था. अ. १८)—इति, अस्मिन् वचने वातोऽप्यवगन्तव्यः, तेनापि शोषस्य क्रियमाणत्वात्। अन्येऽपि तन्त्रान्तरं दृष्ट्वा 'वातपित्तकफोत्सेकात्' इति पठन्ति। उत्सेकादित्युद्रेकात्। तथाहि तन्त्रान्तरं,—"मारुतः पित्तमादाय कफरक्तसमाश्रितः। चिनोति तिलमात्राणि त्वचि ते तिलकालकाः"—इति, किंत्वस्मिन्नपि तन्त्रे कफरक्तसमाश्रित इत्यनेन कफरक्तयोरप्यवलेन पित्तसहितेनोच्छोषादेव तिलकालके कार्ष्ण्यस्य सम्भवोऽवगम्यते, ततश्च 'वातपित्तकफोच्छोषात्' इति पाठो युज्यते। 'वातपित्तरसोद्रेकात्' इति पाठान्तरम्॥३७॥

†महद्वा यदि वा चाल्पं श्यावं वा यदि वाऽसितम्।
नीरुजं मण्डलं गात्रे न्यच्छमित्यभिधीयते ॥ ३८ ॥

न्यच्छलिङ्गमाह—महद्वेत्यादि। असितं कृष्णम्। 'नीरुजं मण्डलं' इत्यस्य स्थाने 'सहजं मण्डलं' इति केचित् पठन्ति, तेन जन्मकालप्रवृत्तं न्यच्छमिच्छन्ति, अत एव न्यच्छस्य पर्याये लाञ्छनमिति तैः पठ्यते। यथा,—'न्यच्छं लाञ्छनमुच्यते'—इति। लाञ्छनं लक्षणम्। अत्र भोजवचनात् पित्तरक्तान्वितो वायुः कारणम्। यदाह,—"रक्तपित्तान्वितो वायुस्त्वक्प्रदेशाश्रितो यदा। जनयेन्मण्डलं कृष्णं श्यावं वा न्यच्छमादिशेत्" इति। अत्र श्यावत्वपक्षे मुखेतरदेश एव सम्भवेन बहुलत्वेन व्यङ्गाद्भेदोऽवगन्तव्यः ॥ ३८ ॥

‡क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः।
मुखमागत्य सहसा मण्डलं विसृजत्यतः ॥ ३९ ॥
नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत्।

व्यङ्गलिङ्गमाह—क्रोधायासेत्यादि। श्यावमिति शुक्लानुविद्धकृष्णवर्णम्। अस्य 'छ्यावक' इति मेछेता' इति च लोके ख्यातिः ॥ ३९ ॥—

कृष्णमेवंगुणं गात्रे मुखे वा नीलिकां विदुः ॥ ४० ॥

नीलिकालक्षणमाह—कृष्णमेवगुणमिति। एवगुणमिति नीरुजतनुकमण्डलधर्मं व्यङ्गोक्तदोषोऽत्रापि बोद्धव्यः, सम्मूर्च्छनविशेषात्तु नीलित्वकारी। कृष्णत्वच्छादतिकृष्णत्वेन भिन्ना नीलिका, व्यङ्गनीलिकयोस्तु व्यक्त एव भेदः—श्यावो व्यङ्गः, कृष्णा नीलिका, भोजे तु नीलिका गात्र एवोक्ता। यदुक्तं,—"मारुतः क्रोधहर्षाभ्यामूर्ध्वगो

*'शरीरस्वकृसमानि नोन्नतानीत्यर्थः। अन्ये तु "वातपित्तासृगुच्छोषात्" इति पठन्ति। तत्र वातपित्ताभ्यां रक्तस्य शोषादित्यर्थः। अत एव तिलकालके कार्ष्ण्यं (आ० द०)॥३७॥

† 'श्यावं शुक्लानुविद्धं कृष्णवर्णं' (आ० द०) ॥ ३८ ॥

‡ 'मुखछाद' इति लोके' (आ० द०) ॥ ३९ ॥—

मुखमाश्रितः । पित्तेन सह संयुक्तः करोति वदनत्वचि ॥ नीरुजं तनुकं श्यावं व्यङ्गं तमिति निर्दिशेत् । कृष्णमेवंगुणं गात्रे नीलिकां तां विनिर्दिशेत्"—इति ॥ ४० ॥

मर्दनात् पीडनाद्वाऽपि तथैवाप्यभिघाततः ।
मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरन् ॥ ४१ ॥
तदा वातोपसृष्टत्वात्तच्चर्म परिवर्तते ।
मणेरधस्तात् कोशश्च ग्रन्थिरूपेण लम्बते ॥ ४२ ॥
सरुजां वातसंभूतां तां विद्यात् परिवर्तिकाम् ।
सकण्डूः कठिना चापि सैव श्लेष्मसमुत्थिता ॥ ४३ ॥

मेढ्रगताभिघातजे रोगत्रये परिवर्तिकामाह—मर्दनादित्यादि । पीडनाद्वाऽपीत्यपिशब्दो मर्दनपीडनाभ्यां सह संबध्यते । अतियोगादेव ते वातं कोपयतः । सर्वतश्चरन्निति व्यानः, 'सर्वतश्चर' इति पाठे स एवार्थः । परिवर्तते इति सर्वतो निवर्तते । कोष इति चर्मकोषः । परिवर्तिकेति वृतधातोः "रोगाख्यायां ण्वुल् बहुलम्"—इति ण्वुल् ( वृत-ण्वुल्-आप् ) । एवमवपाटिकायां च बोद्धव्यम् । अस्या वातजायामपि पित्तानुबन्धाद्दाहपाकौ भवतः, कफसंबन्धस्तु सकण्डूः कठिना चापीत्यादिनाभिहितः । भोजेऽप्युक्तं,—"मणेरधो मेढ्रचर्म व्यानस्तु परिवर्तयेत् । सशूलतोददाहाद्यैर्विज्ञेया परिवर्तिका । श्लैष्मिकी कठिना स्निग्धा कण्डूमत्यल्पवेदना"—इति ॥ ४१-४३ ॥

अल्पीयःखां यदा हर्षाद्बालां गच्छेत् स्त्रियं नरः ।
हस्ताभिघातादपि वा चर्मण्युद्वर्तिते बलात् ॥ ४४ ॥
यस्यावपाट्यते चर्म तां विद्यादवपाटिकाम् ।

अवपाटिकामाह—अल्पीयःखामित्यादि । अल्पीय खामित्यल्पतरं खं योनिछिद्रं यस्याः सा तथा, कन्या वाऽनार्तवा अल्पीयःखा भवति । अत्र हेत्वन्तरं हस्ताभिघातादपि वेति । उद्वर्तित इति ऊर्ध्वं वर्तिते । यस्यावपाट्यत इति स्वयमेव विदीर्यते । एषा च पृथक् दोषप्रदेशानुबध्यते । तथाच भोजः,—"मर्दनादभिघाताद्वा कन्यायोनिप्रपीडनात् । दृश्यते यदि मेढ्रस्य चर्म दीर्णमिव क्षतम् ॥ ज्ञेयाऽवपाटिका सा तु पृथग्दोषैः समन्विता । वातात् सा परुषा रूक्षा शूलनिस्तोदकारिणी ॥ पित्तात् सदाहा रक्ताद्वा दाहतृष्णासमन्विता । श्लैष्मिकी कठिना स्निग्धा कण्डूमत्यल्पवेदना"—इति ॥ ४४ ॥—

*वातोपसृष्टे मेढ्रे च चर्म संश्रयते मणिम् ॥ ४५ ॥
मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च ।
निरुद्धप्रकशे तस्मिन् मन्दधारमवेदनम् ॥ ४६ ॥
मूत्रं प्रवर्तते जन्तोर्मणिर्विव्रियते न च ।
निरुद्धप्रकशं विद्यात् सरुजं वातसंभवम् ॥ ४७ ॥

* 'वातदुष्टमेढ्रे चर्म संश्रयत इति समग्र श्लोके तत्रैव दीयत इत्यर्थः । चर्मसंश्रितो-न्मूत्ररोगो दृश्यते' ( आ० द० )

२ "सर्वतश्चर." इति मुद्रितोऽस्य पाठः ।

निरुद्धप्रकशमाह—वातोपसृष्ट इत्यादि । प्रश्रयत इति सम्यक् श्रयते, अन्तर्नीयत इत्यर्थः । अवपाटिका स्वरूढा चर्मसङ्कोचान्निरुद्धप्रकशो भवतीति ब्रुवते, सन्निरुद्धगुदवत् स्वतन्त्रोऽपि भवतीति शक्यते वक्तुं, निरुद्धप्रकाश इत्यस्मिन्नर्थे निरुद्धप्रकश, नैदकेन च रूपसिद्धिः । मूत्रस्रोत सङ्कुचितचर्मपीडनेन मणे स्वल्पद्वारत्वान्मूत्रस्रोतो रुणद्धि । अवेदनमित्यस्य स्थाने सवेदनमिति केचित् । अत्र भोजाभिप्रायेण व्याचक्षते एकदा विरुद्धे स्रोतसि सवेदनमन्यदा तु प्रकाशे मन्दधारं प्रवर्तते, मणिश्च नावदीर्यते मूत्रेणेति । तथाच भोज —"मेढ्रान्ते चर्मणि यदा मारुत कुपितो भृशम् । द्वारं रुणद्धि स शनैः प्रकाशश्च मुहुर्भवेत् ॥ मूत्रं मूत्रयते कृच्छ्रात् प्रकाशस्तु यदा भवेत् । वातोपसृष्टमेढ्रस्तु मणिर्न च विदीर्यते । निरुद्धं च प्रकाशं च व्याधिं विद्यात् सुदारुणम्"—इति । सुश्रुते तु निरुद्धप्रकशस्वात् निरुद्धप्रकश । मणिर्विभिद्यते न चेति मणिविवृतो न भवति ॥ ४५–४७ ॥

वेगसंधारणाद्वायुर्विहतो गुदसंश्रितः ।
निरुणद्धि महास्रोतः सूक्ष्मद्वारं करोति च ॥ ४८ ॥
मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति ।
सन्निरुद्धगुदं व्याधिमेतं विद्यात् सुदारुणम् ॥ ४९ ॥

मूत्रमार्गरोधकनिरुद्धप्रकशानन्तरं पुरीषमार्गरोधकं सन्निरुद्धगुदमाह—वेगसंधारणादित्यादि । तस्येति गुदस्य । 'महत्स्रोत' इति पाठे तु महत्स्रोतो गुदविवरं, निरुद्धप्रकाशवदत्रापि चर्मसङ्कोचात् सन्निरुद्धगुदम् ॥ ४८ ॥ ४९ ॥

शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत् ।
स्विन्ने वाऽस्नाप्यमाने वा कण्डू रक्तकफोद्भवा ॥ ५० ॥
कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते ।
एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम् ॥ ५१ ॥

अहिपूतनमाह—शकृन्मूत्रेत्यादि । अपान इति गुदे, स्विन्ने स्वेदयति, अस्नाप्यमाने अक्रियमाणक्षालने, स्वेदमलसङ्गादेव कण्डूर्भवतीत्यर्थः । एकीभूतमिति अपान व्रणै सहैकीभूतम् । अहिपूतनं च बालानामेव भवति, भोजे पुनरिदं दुष्टस्तन्यपानादपि भवतीति पठितम् । यदुक्तं,—"दुष्टस्तन्यस्य पानेन मलस्याक्षालनेन च कण्डूरा दम्पायद्धि पिटकैश्च समाचिता ॥ समवन्ति यथादोष दारुणा ह्यहिपूतना"—इति ॥ ५० ॥ ५१ ॥

*स्नानोत्सादनहीनस्य मलो वृषणसंस्थितः ।
यदा प्रक्लिद्यते स्वेदात् कण्डूं जनयते तदा ॥ ५२ ॥
कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते ।
प्राहुर्वृषणकच्छूं तां श्लेष्मरक्तप्रकोपजाम् ॥ ५३ ॥

अहिपूतनसमानहेतुलिङ्गतया गुदाश्रय गुदभ्रंशानन्तरं वृषणकच्छूमाह—

* 'उत्सादनमाहरणमन्त्र' ( भा० द० ) ॥ ५२ ॥ ५३ ॥

म्लानोत्सादनहीनस्येत्यादि । एषा च निदानविशेषात् प्रायो रूपणमावित्वाद्विशिष्ट-चिकित्सोपयोगित्वाच्च वृद्धोककन्दूतो भेदेन पठ्यते ॥ ५२ ॥ ५३ ॥

*प्रवाहणातीसाराभ्यां निर्गच्छति गुदं बहिः ।
रूक्षदुर्बलदेहस्य गुदभ्रंशं तमादिशेत् ॥ ५४ ॥

गुदभ्रंशलिङ्गमाह—प्रवाहणेत्यादि । प्रवाहणं प्रकर्षेण वुन्धनम् । 'वाह प्रयत्ने' इत्यस्य रूपम् । प्रवाहणेनानिवेगोदीरणेन वातकोपः, अतीसारेण तु धातुक्षयात्; यदि वा प्रवाहणेनातीसारेण चाधोगतमारुतत्वेन गुदनिर्गमो रूक्षादिदेहस्य ॥ ५४ ॥

†सदाहो रक्तपर्यन्तस्त्वक्पाकी तीव्रवेदनः ।
कण्डूमान् ज्वरकारी च स स्याच्छूकरदंष्ट्रकः ॥ ५५ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने क्षुद्ररोगनिदानं समाप्तम् ॥ ५५ ॥

वराहदंष्ट्रलिङ्गमाह—सदाह इत्यादि । अयं 'वराहदाट' इति लोके प्रसिद्धः ॥५५॥

इति श्रीकण्ठदत्तकृतायां मधुकोशाख्यायां क्षुद्ररोगनिदानं समाप्तम् ॥ ५५ ॥

---

## अथ मुखरोगनिदानम् ।

आनूपपिशितक्षीरदधिमत्स्यातिसेवनात् ।
मुखमध्ये गदान् कुर्युः क्रुद्धा दोषाः कफोत्तराः ॥ १ ॥

रोगगणत्वसामान्यान्मुखरोगनिदानमुच्यते-आनूपेत्यादि । मुखरोगाश्च पञ्चषष्टि-र्भवन्ति । यदाह भोजः,—"दन्तेष्वष्टावोष्ठयोश्च मूलेषु दश पञ्च च । नव तालुनि जिह्वायां पञ्च षोडशास्यमध्यगाः । कण्ठे त्रयः सर्वसरा एकषष्टिश्च ते गदाः"—इति ॥ १ ॥

तत्रादावोष्ठगतानाह—

‡कर्कशौ परुषौ स्तब्धौ संप्राप्तानिलवेदनौ ।
दाल्येते परिपाट्येते ओष्ठौ मारुतकोपनः ॥ २ ॥

वातिकलक्षणमाह—कर्कशावित्यादि । दाल्येते इति विदार्येते । परिपाट्येते इति किञ्चिदवदीर्णत्वचौ भवत इत्यर्थः ॥ २ ॥

चीयेते पिडकाभिश्च सरुजाभिः समन्ततः ।
सदाहपाकपिडकौ पीताभासौ च पित्ततः ॥ ३ ॥

पैत्तिकलक्षणमाह—चीयेते इत्यादि । सरुजाभिरिति विसर्पनदजान्विताभिः । इदं च सदाहपाकपिडकावित्ति विमर्षेऽप्युच्यते । पूर्वेणैव गतार्थत्वात् । नैवं, पक्षान्तर-

प्रतीत्यर्थं पुनरुच्यते, अयमर्थः—कदाचित् पित्तरुजान्वितबहुपिडकाचितावोष्ठौ कदाचिद्दाहपाकान्वितपिडकाचितौ वा भवत, अन्यस्त्वाह—अनतिभिन्नार्थत्वाद्व्यक्तशब्दार्थत्वाच्च दाहपाकातिशयदर्शनार्थं पिडकानुवाद ॥ ३ ॥

सवर्णाभिश्च चीयेते पिडकाभिरवेदनौ ।
भवतस्तु कफादोष्ठौ पिच्छिलौ शीतलौ गुरू ॥ ४ ॥

कफजमाह—सवर्णाभिरित्यादि । सवर्णाभिरिति ओष्ठसमानवर्णाभिः । अवेदनौ ईषद्वेदनौ ॥ ४ ॥

सकृत्कृष्णौ सकृत्पीतौ सकृच्छ्वेतौ तथैव च ।
सन्निपातेन विज्ञेयावनेकपिडकाचितौ ॥ ५ ॥

सान्निपातिकलक्षणमाह—सकृदित्यादि । सकृदिति कदाचिद्विकृतिवशादेव भवति । अनेकपिडकाचिताविति वातादिवेदनान्वितबहुपिडकौ, अनेकवर्णपिडकाचिताविस्यन्ये, अनेकाश्च वर्णा वातादीनां कृष्णपीतश्वेताः, अत्र पक्षे सकृत्कृष्णावित्यादिपिडकातोऽन्यत्र कल्पनीयम् ॥ ५ ॥

खर्जूरफलवर्णाभिः पिडकाभिर्निपीडितौ ।
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ ६ ॥

रक्तजमाह—खर्जूरेत्यादि । खर्जूरफलवर्णाभिरित्यनेन वर्णमात्रेणैव साधर्म्यं प्रतिपाद्यते, यदि तु सर्वात्मना साधर्म्यमभीष्टं स्यात्, तदा 'खर्जूरफलतुल्याभिः' इत्येवोच्येत । रक्तोपसृष्टाविति रक्तदूषितौ ॥ ६ ॥

*गुरू स्थूलौ मांसदुष्टौ मांसपिण्डवदुद्गतौ ।
जन्तवश्चात्र मूर्च्छन्ति नरस्योभयतो मुखात् ॥ ७ ॥

मांसजमाह—गुरू स्थूलावित्यादि । जन्तवश्चात्र मूर्च्छन्तीति क्रिमयोऽप्यत्र उच्छ्रिता भवन्ति । उभयतो मुखादिति मुखविवरमपेक्ष्योभयभागयोः, सृक्कणीप्रदेशयोरिति यावत् । मुखादिति ल्यब्लोपे पञ्चमी । 'उभयतोमुखा' इति पाठान्तरे उभयसृक्कणीभागौ मुखमाश्रयो येषां ते तथा । द्विमुखा इत्यन्ये ॥ ७ ॥

सर्पिर्मण्डप्रतीकाशौ मेदसा कण्डुरौ गुरू ।
अच्छं स्फटिकसंकाशमास्रावं स्रवतो भृशम् ॥ ८ ॥
तयोर्व्रणो न संरोहेन्मृदुत्वं च न गच्छति ।

मेदोजमाह—सर्पिर्मण्डप्रतीकाशावित्यादि । सर्पिर्मण्डप्रतीकाशाविति सर्पिर्मण्डो घृतस्योपरितनः स्वच्छभागः, तत्प्रतीकाशौ तत्सदृशौ । तयोरिति तादृशयोः ॥ ८ ॥—

†क्षतजाभौ विदीर्येते पाट्येते चाभिघाततः ॥ ९ ॥
ग्रथितौ च तथा स्यातामोष्ठौ कण्डूसमन्वितौ ।

अभिघातजमाह—क्षतजाभावित्यादिना । अत्र कफरक्तयोरप्यनुबन्धो बोद्धव्यः ।

---

* 'उभयतोमुखा' इति पाठान्तरं, तत्र द्विमुखा' (आ० द०) ॥ ७ ॥

† 'विदीर्येते स्फुट्येते पाट्येते छिन्नीक्रियेते । पाटनं भेदनं स्वकारणकृतम्, अत्र तु बाह्याभिघातारब्धे, तयोरयमेव भेदः । एवमन्यत्रावगन्तव्यम्' (आ० द०) ॥ ९ ॥—

यदुक्तं भोजे,–"क्षतावभिहतौ वापि रक्ताबोष्ठौ सवेदनौ । भवतः सपरिस्रावौ कफरक्तप्रदूषिणौ"–इति । वायुरप्यत्राभिघाताल्लभ्यते, अयं चाभिघातजशोथाद्यथोक्तलक्षणकारणभेदेन तथा वातिकोष्ठप्रकोपादपि कफरक्तरूपहेतुभेदयोगाद्भिद्यते ॥ ९ ॥

दन्तमूलगतान् पञ्चदश व्याकरोति—

*शोणितं दन्तवेष्टेभ्यो यस्याकस्मात्प्रवर्तते ।
दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥ १० ॥
दन्तमांसानि शीर्यन्ते पचन्ति च परस्परम् ।
शीतादो नाम स व्याधिः कफशोणितसंभवः ॥ ११ ॥

शीतादमाह—शोणितमित्यादि । दन्तवेष्टेभ्य इति दन्तबन्धनमांसेभ्यः । अकस्मादिति अभिघातादिनिमित्तं विना । 'शीर्यन्ते' इत्यस्य स्थाने, 'पच्यन्ते' इति गदाधरः, व्याचष्टे च–'स्वयं' इति शेषः । पचन्ति च परस्परमित्यन्योन्यं पचन्ति, पाकोष्मद्दूषितशोणितसंचरणेन ॥ १० ॥ ११ ॥

†दन्तयोस्त्रिषु वा यस्य श्वयथुर्जायते महान् ।
दन्तपुप्पुटको नाम स व्याधिः कफरक्तजः ॥ १२ ॥

दन्तपुप्पुटकमाह—दन्तयोरित्यादि । अयं च दन्तयोस्त्रिष्वित्यभिधानाद् द्वित्रिदन्तनियतः, कफरक्तजत्वेऽपि शौषिराद्भिन्नोऽयं, रुजालालास्रावाभावात् ॥ १२ ॥

स्रवन्ति पूयरुधिरं चला दन्ता भवन्ति च ।
दन्तवेष्टः स विज्ञेयो दुष्टशोणितसंभवः ॥ १३ ॥

दन्तवेष्टमाह—स्रवन्तीत्यादि । स्रवन्ति पूयरुधिरमित्यत्र 'दन्तमूलानि' इति शेषः । चला दन्ता भवन्ति चेति चकारेण पचन्ति चेति द्रष्टव्यम् ॥ १३ ॥

‡श्वयथुर्दन्तमूलेषु रुजावान् कफरक्तजः ।
लालास्रावी स विज्ञेयः शौषिरो नाम नामतः ॥१४॥

शौषिरलिङ्गमाह—श्वयथुरित्यादि । नामत इति प्रसिद्धितः ॥ १४ ॥

§दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्यते ।
यस्मिन् स सर्वजो व्याधिर्महाशौषिरसंज्ञितः ॥ १५ ॥

महाशौषिरलिङ्गमाह—दन्ता इत्यादि । तालु चाप्यवदीर्यत इत्यत्र चकारेण दन्ता ओष्ठौ चाप्यवदीर्यन्ते इति बोद्धव्यम् । सप्तरात्रात्ययं मारकः । यदाह भोजः,–"सदाहो दन्तमूलेषु शोथः पित्तकफानिलात् । जातः कर्क सपयति क्षीणे तस्मिंस्तु

*'रक्तं प्रवर्तते; दन्तमांसानि दुर्गन्धीनि कृष्णानि क्लेदयुक्तानि मृदूनि च भवन्ति, तथा शीर्यन्ते पचन्ति, स शीतादो नाम व्याधिरिति' (आ० द०) ॥ १० ॥ ११ ॥

† 'दन्तयोर्द्वयोस्त्रिषु वा शिवथुः कफरक्तजो दन्तपुप्पुटकः' (आ० द०) ॥ १२ ॥

‡ 'दन्तमूलेषु श्वयथुः पीडावान् कफरक्तोत्थो लालास्रावी स शौषिरो नाम नामतः प्रसिद्ध इति' (आ० द०) ॥ १४ ॥

§'यस्मिन् व्याधौ वेष्टेभ्यो दन्ताश्चलन्ति, स सर्वजः सर्वदोषजः' (आ० द०) ॥ १५ ॥

शोणितम् ॥ विरुद्धमनिर्यं दन्तान् तान्चोष्ठमपि दारयेत् । महाशौषिर इत्येतत् सप्तरात्राद्धिनस्त्यसून्"–इति । यस्मिन् शौषिरे एवमपि भवति स महाशौषिर इति गदाधरः ॥ १५ ॥

*दन्तमांसानि शीर्यन्ते यस्मिन् ष्ठीवति चाप्यसृक् ।
पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः ॥ १६ ॥

परिदरमाह—दन्तमांसानीत्यादि । दन्तमांसस्य परिदारणात् परिदरसंज्ञा ॥१६॥

†वेष्टेषु दाहः पाकश्च ताभ्यां दन्ताश्चलन्ति च ।
यस्मिन् सोपकुशो नाम पित्तरक्तकृतो गदः ॥ १७ ॥

उपकुशलक्षणमाह—वेष्टेष्वित्यादि । ताभ्यामिति दाहपाकाभ्याम् । सोपकुश इति निर्देशोऽसिद्धत्वानिर्व्याबादसाधुः, तेन स उपकुश इत्यर्थः ॥ १७ ॥

‡घृष्टेषु दन्तमांसेषु संरम्भो जायते महान् ।
चला भवन्ति दन्ताश्च स वैदर्भोऽभिघातजः ॥ १८ ॥

वैदर्भलिङ्गमाह—घृष्टेष्वित्यादि । संरम्भ इति शोथः, वेदनापाकौ वा ॥ १८ ॥

§मारुतेनाधिको दन्तो जायते तीव्रवेदनः ।
खलिवर्धनसंज्ञोऽसौ जाते रुक् च प्रशाम्यति ॥ १९ ॥

खलिवर्धनलिङ्गमाह—मारुतेनेत्यादि । जाते रुक् च प्रशाम्यतीति उत्थितेऽधिके दन्ते प्रभावाद्वेदनाया अभावः ॥ १९ ॥

¶शनैः शनैः प्रकुरुते वायुर्दन्तसमाश्रितः ।
करालान्विकटान् दन्तान् करालो न स सिध्यति ॥ २० ॥

करालक्षणमाह—शनैरित्यादि । करालान् विषमान् । करालस्तु सुश्रुतेऽनुक्तोऽधिकः संग्रहकारेण पठितः, तेन सुश्रुतोक्तपञ्चदशसंख्याहानिः ॥ २० ॥

हानव्ये पश्चिमे दन्ते महान् शोफो महारुजः ।
लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ।

* 'यस्मिन् मांसानि शीर्यन्ते, ष्ठीवति चाप्यसृगिति शेषो योजनीय मुखरोगोऽयमित्यर्थः । स व्याधिः परिदरो ज्ञेयः । कथम्भूतः ? पित्तासृक्कफजः' ( आ० द० ) ॥ १६ ॥

† 'वेष्टेषु दन्तवेष्टनमांसेषु दाहः पाकश्च स्यात् । दन्ताश्चलन्ति ( आघट्टिता आचाल्यमानाः शोणितं स्रवन्ति, मन्दरुजः, श्लेष्मो रुद्धे सति ते तस्मात्स्यादनन्ते, ध्रुव पूर्ण च भवति । ) ताभ्यामित्यत्र 'वेष्टेभ्य' इति पाठे, तेभ्यो दन्तवेष्टेभ्यः । सोपकुश इति निर्देशोऽसिद्धत्वात्साधुः' ( आ० द० ) ॥ १७ ॥

‡ 'दन्तमूलेषु दन्तमांसेषु दन्तकाष्ठादिना घृष्टेषु सत्सु महान् संरम्भो जायते, दन्ताश्च चला भवन्ति, स व्याधिरभिघातजो वैदर्भ इत्युच्यते' ( आ० द० ) ॥ १८ ॥

§ 'मारुतेन वायुना दीर्घोऽधिको दन्तो जायते, असौ विकारः खलिवर्धनसंज्ञः' ( आ० द० ) ॥ १९ ॥

¶ 'वायुर्दन्तसमाश्रितः सन् शनैःशनैर्दन्तान् करालान्विकटान् विकृतान् कुरुते, स व्याधिः करालो न सिध्यति' ( आ० द० ) ॥ २० ॥

अधिमांसकमाह—हानव्य इत्यादि। अधिमांसक इति संज्ञायां कन्। हानव्य इति हनुहरे। पश्चिम इत्यवसानजे, अन्तजे इति यावत् ॥—

*दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ॥ २१ ॥

पञ्च दन्तनाडीराह—दन्तेत्यादि। नाड्यः पञ्च ज्ञेया यथेरिता इति नाडीनिदाने यथोक्ता वातपित्तकफसन्निपातागन्तुनिमित्तास्तथा दन्तमांसगता अपि नाड्यः। एताश्च नाडीव्रणसमानलक्षणा अपि शालाक्यसिद्धान्तेन संख्यापूरणाय चिकित्साभेदाच्च पुनरुक्ताः ॥ २१ ॥

दन्तगतानष्टौ प्राह—

†दीर्यमाणेष्विव रुजा यस्य दन्तेषु जायते।
दालनो नाम स व्याधिः सदागतिनिमित्तजः ॥ २२ ॥

सदागतिनिमित्तज इति सदागतिर्वायुः, तस्मान्निमित्ताज्जात इति। सदागतिनिमित्तत इति वक्तव्ये सदागतिनिमित्तज इति यत्कृतं तद्बलवद्धेतुजन्यत्वातकृतत्वबोधनार्थमिति कार्तिकः, केवलवातजत्वख्यापनार्थमित्यन्ये ॥ २२ ॥

‡कृष्णश्छिद्रश्चलः स्रावी ससंरम्भो महारुजः।
अनिमित्तरुजो वाताद्विज्ञेयः क्रिमिदन्तकः ॥ २३ ॥

क्रिमिदन्तकमाह—कृष्णच्छिद्र इत्यादि। कृष्णच्छिद्र इति दुष्टरक्तजक्रिमिकृतशोथपाकद्वारेण कृष्णच्छिद्र इत्यर्थः। अन्ये 'कृष्णश्चित्र' इति पठन्ति, चित्र इति चित्रवान्, अर्शआदित्वादच्। स्रावीति दन्तमूलेषु स्रावो बोद्धव्यः, दन्तानां नीरसत्वेन स्रावाभावात्। अनिमित्तरुज इति अवपट्टनादिनिमित्तं विनैव महारुजत्वेन रुजावानिति कार्तिकः ॥ २३ ॥

§वक्रं वक्रं भवेद्यस्य दन्तभङ्गश्च जायते।
कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः ॥ २४ ॥

भञ्जनकलक्षणमाह—वक्रमित्यादि। वक्रं वक्रमिति दन्तभङ्गकारिणा दोषेण वक्त्रस्यापि वक्रत्वम् ॥ २४ ॥

---

* 'तासां मध्ये त्रिलिङ्गा नाडी असाध्या' (आ० द०) ॥ २१ ॥

† 'दन्तेषु दीर्यमाणेष्विव दाल्यमानेष्विव भृशं रुजा भवति, स दालनो नाम व्याधिः। असाध्योऽयं व्याधिः' (आ० द०) ॥ २२ ॥

‡ 'कृष्णः कृष्णदन्तकः, छिद्र इति छिद्रवान्, अर्शआदित्वादच्। कृष्णच्छिद्रः स्यात्छिद्रदन्त इत्यर्थः। चलश्चलदन्तः। ससंरम्भः सश्वयथुः। स तथाविधो वातात् क्रिमिदन्तको ज्ञेयः' (आ० द०) ॥ २३ ॥

§ 'यस्मिन् रोगे दन्तभङ्गकारिणा दोषेण वक्त्रमपि वक्त्रं भोजनमन्यथा भवेत्; 'भज्यते' इत्यत्र 'दीर्यते' इति पाठान्तरम्; स व्याधिर्भञ्जनक इति स्मृतः। कफवातकृतः। असाध्योऽयं व्याधिः' (आ० द०) ॥ २४ ॥

*शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः ।
पित्तमारुतकोपेन दन्तहर्षः स नामतः ॥ २५ ॥

दन्तहर्षलक्षणमाह—शीतेत्यादि । 'शीतमुष्णं च दशना सहन्ते स्पर्शनं न च । यस्य तं दन्तहर्षं [illegible] व्याधिं विद्यात् समीरणात्'—इति श्लोकान्तरं पठन्ति । तत्र दन्तहर्षस्य वातजत्वेऽप्युष्णासहत्वं व्याधिप्रभावात्, कफरक्तानुगतत्वाद्वा बोद्धव्यम् ॥ २५ ॥

मलो दन्तगतो यस्तु पित्तमारुतशोषितः ।
शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा ॥ २६ ॥

दन्तशर्करालक्षणमाह—मल इत्यादि । 'शर्करेव खरस्पर्शा' इत्यस्य स्थाने 'सा दन्तानां गुणहरी' इति क्वचित् पठ्यते, दन्तानां गुणस्य शुक्लत्वदृढत्वादिकस्य हरणशीला ॥ २६ ॥

†कपालेष्विव दीर्यत्सु दन्तानां सैव शर्करा ।
कपालिकेति विज्ञेया सदा दन्तविनाशिनी ॥ २७ ॥

कपालिकालक्षणमाह—कपालेष्वित्यादि । कपालेष्विवेति मलसहितदन्तावयवेषु काठिन्यात् कपालतुल्येषु, दन्तमल एव कठिने कपालप्राये दीर्यमाणे सैव शर्करा कपालिका । सदेति पाल्यादौ । अत्रावकाशे हनुमोक्षं सुश्रुते दन्तदेशसामीप्याद्दन्तपीडनाच्च पठितं, स इह सम्प्रहकारेण मुख्यदन्तगतत्वाभावान्न पठितः, पठितस्तु हनुग्रहसंज्ञया वातव्याधौ भोजवचनात् । यदुक्तं,—"वाताभिघाताज्जन्तोर्हि हनुसन्धिर्विमुच्यते । निरस्तजिह्वं कृच्छ्रेण आपितं तत्र गच्छति ॥ सम्यक् तमनिलव्याधिं हनुमोक्षं विनिर्दिशेत्"—इति ॥ २७ ॥

§योऽसृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः ।
श्यावतां नीलतां वापि गतः स श्यावदन्तकः ॥ २८ ॥
दन्तमांसे मलैः सास्रैर्बाह्यान्तः श्वयथुर्गुरुः ।
सदाहरुक् स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः ॥ २९ ॥

---

* 'यस्य द्विजा दन्ताः शीतस्य रूक्षस्य प्रवातस्य प्रचण्डवातस्याम्लस्यासहा अक्षमा भवन्ति, [illegible] नामतः प्रसिद्धितः पित्तमारुतकोपेन दन्तहर्षो ज्ञेयः । केचन इत्यत्र "रूक्ष" इति पाठान्तरम्' (आ० द०) ॥ २५ ॥

† 'यो दन्तगतो मलः कफमारुतशोषितो भवति सा दन्तशर्करा । तथा च वाग्भटः—"अधावनान्मलो दन्ते कफवातेन शोषितः । पूतिगन्धः स्थिरीभूतः शर्करा साऽप्युपेक्षिता"—इति' (आ० द०) ॥ २६ ॥

‡ 'दन्तविनाशिनी । "दलन्ति दन्तवल्कानि यदा शर्करया सह" इति केचित्पठन्ति, तत्रापि [illegible] एवार्थः' (आ० द०) ॥ २७ ॥

§ 'श्यावदन्तकमाह—य इत्यादि । यो दन्तोऽसृग्मिश्रेण पित्तेनाशेषतो दग्धस्तथा श्याववर्णमथवा नीलतां गतो भवति, स श्यावदन्तको ज्ञेयः । श्यावदन्तक इति संज्ञायां कन् । असाध्योऽयं व्याधिः' (आ० द०) ॥ २८ ॥ २९ ॥

---

१ अत्र "हनु-" इत्यत्र "मन्य-" इत्येव पाठं गुरवो मन्वते ।

*जिह्वाऽनिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा।
पित्तेन दह्यत्युपचीयते च दीर्घैः सरक्तैरपि कण्टकैश्च।
कफेन गुर्वी बहुलाचिता च मांसोच्छ्रयैः शाल्मलिकण्टकाभैः ३०

सम्प्रति जिह्वागतानाह—जिह्वाऽनिलेनेत्यादि। स्फुटितेति मनाग्विदीर्णा। प्रसुप्तेति सुप्तेव, रसस्यानवबोधात्। शाकच्छदनप्रकाशेति शाकतरुपत्रवत् कण्टकाचितेत्यर्थः, शाको मरुजद्रुमः। पैत्तिककण्टकलक्षणे दह्यतीति आत्मनेपदानित्यत्वात् साधु। अयं च रोगो जाडीनि ख्यात ॥ ३० ॥

जिह्वातले यः श्वयथुः प्रगाढः
सोऽलाससंज्ञः कफरक्तमूर्तिः।
जिह्वां स तु स्तम्भयति प्रवृद्धो
मूले च जिह्वा भृशमेति पाकम् ॥ ३१ ॥

अलासमाह—जिह्वेत्यादि। प्रगाढ इति प्रकर्षेण गाढो दारुण इत्यर्थः। तेन 'जिह्वागतेष्वलासस्तु' इत्यादिनाऽलासस्यासाध्यतोक्ता सूच्यते। कफरक्तमूर्तिरिति कफरक्ताभ्यां हेतुभ्यां लब्धमूर्तिः। कफरक्तज इत्यर्थः। जिह्वास्तम्भेन वायुरप्यत्र बोद्धव्यः, भृशपाकेन पित्तं, अतस्त्रिदोषजो ज्ञेयः, अत एवास्यानुपक्रमेणासाध्यत्वं, कफरक्तयोस्तु प्राधान्येनाभिधानम्। 'अधोगत' इति पाठान्तरे जिह्वाया अधोगत ॥ ३१ ॥

‡जिह्वाग्ररूपः श्वयथुर्हि जिह्वामुन्नम्य जातः कफरक्तमूलः।
लालाकरः कण्डुयुतः सचोषः सा तूपजिह्वा पठिता भिषग्भिः ३२

उपजिह्विकामाह—जिह्वाग्ररूप इत्यादि। सचोष इति चोषः साक्षादग्निसन्निधेनेवोपतापः, चोषश्चात्र रक्तयोनिना पित्तेन ॥ ३२ ॥

तालुगतानाह—

---

* 'सुप्तेति सुप्तेव रसस्यानवबोधाच्चेतनेत्यर्थः। सरक्तैः कण्टकैश्चाचिता। अयं च रोगो जाडीनि ख्यातः। 'पित्तात्सदाहैरुपचीयते तु दीर्घैः' इति पाठान्तरे पित्ताज्जिह्वा सदाहैः कण्टकैर्व्याप्यते। कफकण्टकानाह—कफेनेत्यादि। कफेन दूषिता जिह्वा गुर्वी बहुला स्थूला शाल्मलिकण्टकाभैर्मांसोच्छ्रयैर्मांसाङ्कुरैश्चिता व्याप्ता भवतीति संबन्धः।' (आ० द०) ३० ॥

† 'यो जिह्वातले श्वयथुः, सोऽलासनामा विकारः, स तु घोरः प्रवृद्धो जिह्वां स्तम्भयति, जिह्वामूले भृशं पाकं प्राप्नोति' (आ० द०) ॥ ३१ ॥

‡ 'उन्नम्य उच्चैःकृत्य, तेन जिह्वाया अधो भवतीत्युक्तं, जिह्वाग्ररूपो जिह्वाग्रसन्निभः, कफरक्तमूलः कफरक्तकारणम्। भिषग्भिः सा उपजिह्विका पठिता' (आ० द०) ॥ ३२ ॥

---

¹ पश्चिमो दिक्करणान्तुदात्तेत्त्वप्रयुक्तात्मनेपदस्यानित्यत्वेऽपि "भावकर्मणोः" इति विहितात्मनेपदस्यानित्यत्वेनात्र साधुत्वसाधनं न्याय्यमपि नेति सुधीभिरेवानुसंधेयम्, चक्षुङादेशस्य अप्यादेशाभूतस्यादर्शनात् परे।

*श्लेष्मासृग्भ्यां तालुमूले प्रवृद्धो
दीर्घः शोथो ध्मातवस्तिप्रकाशः ।
तृष्णाकासश्वासकृच्चं वदन्ति
व्याधिं वैद्याः कण्ठशुण्डीति नाम्ना ॥ ३३ ॥

कण्ठशुण्डीमाह—श्लेष्मासृग्भ्यामित्यादि । ध्मातवस्तिप्रकाश इति वायुपूरितचर्मपुटतुल्यः ॥ ३३ ॥

शोथः स्थूलस्तोददाहप्रपाकी
प्रागुक्ताभ्यां तुण्डिकेरी मता तु ।

तुण्डिकेरीलक्षणमाह—शोथ इत्यादि । प्रागुक्ताभ्यामिति श्लेष्मासृग्भ्याम् । तुण्डिकेरी वनकार्पासीफलं, तत्तुल्यशोथतया तुण्डिकेरी । तोददाहाभ्यामिह वातपित्तानुबन्धो ज्ञेयः ॥—

†मृदुः शोथो लोहितः शोणितोत्थो
ज्ञेयोऽध्रुषः सज्वरस्तीव्ररुक् च ॥ ३४ ॥

अध्रुषलक्षणमाह—मृदुरित्यादि । शोणितोत्थ इति रक्तसमुत्थः ॥ ३४ ॥

‡कूर्मोत्सन्नोऽवेदनोऽशीघ्रजन्मा
रोगो ज्ञेयः कच्छपः श्लेष्मणा तु ।

कच्छपलक्षणमाह—कूर्मोत्सन्न इत्यादि । अवेदन इत्यल्पवेदनः । अशीघ्रजन्मेति चिरजः ॥—

§पद्माकारं तालुमध्ये तु शोथं
विद्याद्रक्तादर्बुदं प्रोक्तलिङ्गम् ॥ ३५ ॥
दुष्टं मांसं नीरुजं तालुमध्ये
कफाच्छूनं मांससंघातमाहुः ।

तालर्वुदमाह—पद्माकारमित्यादि । पद्माकारमिति पद्मकर्णिकाकारम् । तथाच भोजः,—"उपर्येव भवेद्भद्रो यथा पद्मस्य कर्णिका । पार्श्वतश्चाङ्कुरैर्दीर्घैर्नाना चाप्यवसीदति ॥ श्लेष्मरक्तसमुत्थानं तत्ताल्वर्बुदसंज्ञितम्"—इति । रक्तजत्वाल्लोहितम् । प्रोक्तलिङ्गमिति पूर्वोक्तरक्तार्बुदतुल्यलिङ्गमित्यर्थः ॥ ३५ ॥—

---

* 'श्लेष्मरक्ताभ्यां तालुमूले प्रवृद्धस्तथा दीर्घः प्रलम्बः शोफः कण्ठशुण्डीति गलशुण्डीति नाम्नाऽयं व्याधिः पठितः' ( आ० द० ) ॥ ३३ ॥

† 'स्तब्धादिलक्षण· शोथोऽध्रुषो ज्ञेयः । अध्रुष इति कन्दोन्नुरोधात्' (आ० द०) ॥ ३४ ॥

‡ 'कूर्मोन्नतः कूर्मवदुन्नतः, अवेदन इत्यल्पव., अशीघ्रजन्मेति चिरज. मन्दानुसारी-स्पर्शः, भरतः पाण्डुरः' ( आ० द० )—

§ 'तालुमध्ये उत्सन्नः शोफः रक्तार्बुद विद्यात् । मांससंघातमाह—दुष्टमित्यादि । अत्र केचित् "दुष्ट मांसं श्लेष्मणा नीरुजं वा तालव्यन्तःस्थम्" इति पठन्ति' ( आ० द० ) ॥ ३५ ॥

